# * रतिरहस्यम् *

नाम

आयुर्वेदाङ्गभूतस्वस्थवृत्तान्तर्गतरतिमार्गाभिधायकं
ग्रन्थरत्नम् ।

## श्रीमत्काञ्चीनाथकृत–दीपिकाख्यया व्याख्यया समुद्भासितम्

पालयँल्लौकिकीं पुण्यां पुरुषार्थत्रयस्थितिम् ।
रतिशास्त्ररहस्यज्ञः सुखमाप्नोति शाश्वतम् ॥ १ ॥

श्रीमद् दैवज्ञरत्न जीवानन्द शर्मतनूजेन घिलडियालोपाह्वेन
सदानन्दशास्त्रिणा प्राणाचार्येण
परिशोधितम् ।

लवपुरीय-"मुम्बई संस्कृत"-मुद्रणयन्त्रालये मुद्रितं तदध्यक्षैरेव
प्रकाशितञ्च ।

* ॐ *

# स्वल्पः प्रस्तावः—

"तदेतत्कुशलो विद्वान् धर्मार्थाववलोकयन् ।
नातिरागात्मकः कामी प्रयुञ्जानः प्रसिद्ध्यति ॥

हं हो विद्वद्वरेण्याः !

क्षण मितो ऽपि दीयतां प्रणयमदघूर्णित मीक्षणम् । नैतत्र विदिततरं तत्रभवतां श्रीमतां, यत् कामाभिधतृतीयपुरुषार्थाभिधायक—कामसूत्रप्रभृतिप्रबन्धशतकेष्वन्यतममिदं "रतिरहस्याख्यं" ग्रन्थरत्नम् ।

एतद्धि कामाभिधायकतत्तत्प्रबन्धशतकप्रतिपादित—सर्वजन समुपेयातिदुर्विज्ञेयविषयनिवहांस्तथा विशदतया समुपवर्णयति, यथा सुकुमारमतयोऽध्ययनेनैव तत्तद्रहस्यजातं निःशेषतो ऽधिगन्तुं पारयेयुः । अपि चैतत् कामसूत्रप्रभृतिप्रबन्धानिवहानुद्भूतानाविष्कृताविदितातिरमणीयानिर्वचनीयरतिरसाधायक—"मदनगमनदोला" (Clitoris) पूर्णचन्द्रानाडी–(Vulvovaginal glands) कामातपत्र (Labiaminoria) प्रभृतिसंप्रयोगाहाङ्गविशेषान् समुपवर्णयन् परां प्रीतिमुपजनयति प्रेक्षावतां भावुकानाम् ।

तस्यैवंविधस्य सुकुमारमतिसुविज्ञेयदीपिकाख्य विवृति समुपेतस्यास्य ग्रन्थरत्नस्य अतिविशुद्धं राजसंस्करणोपम मपि प्रथमसंस्करणं सर्वजनसौलभ्याय स्वल्पमूल्येनैव विक्रेतुं मुद्रापित मिति त्वरयन्तु स्वैतत्पुस्तक ग्रहणाय । नो चेद् द्वितीयसंस्करणमुद्रणावसरः प्रतिपालनीयः स्याद्भवद्भिः ॥

इति निवेदयति—

घिलडियालोपाह्वः सदानन्द, शर्म्मा,

शास्त्री, प्राणाचार्यः ।

# अकारादिक्रमेण श्लोकानां सूची ।

# पारिभाषिकशब्दानां सूची.

# विषयाणां सूची ।



श्रीगणेशाय नमः ।

# सटीकं रतिरहस्यम् ।



नत्वा महागणपतिं कोकोककृतस्य रतिरहस्यस्य ।
क्रियते दर्शितभावा काञ्चीनाथेन दीपिका सुधिया ॥

प्रजापतिर्हि प्रजाः सृजन् स्थितिनिबन्धनं त्रिवर्गसाधनं शास्त्रमध्यायानां शतसहस्रेणाग्रे प्रोवाच । तस्यैकदेशं स्वायम्भुवो मनुर्धर्माधिकारिकं पृथक्चकार । बृहस्पतिरर्थाधिकारिकम् । भगवतः सकलसुरासुरमौलिघटितकिरीटमणिप्रभादीपितपादारविन्दस्य पार्वतीपतेरनुचरेण नन्दिना सहस्रेणाध्यायानां पृथक्कामसूत्रे तन्त्रमुक्तम् । तदेव पञ्चभिरध्यायशतैरौद्दालकिः श्वेतकेतुः संक्षिप्य प्रोवाच । तदेव पुनरध्यर्धेनाध्यायशतेन साधारण-सांप्रयोगिक-कन्यासंप्रयुक्तक-भार्याधिकारिक-पारदारिक-वैशिकौ-पनिषदिकैः सप्तभिरधिकरणैर्बाभ्रव्यः पाञ्चालश्चकार । तस्य षष्ठं वैशिकमधिकरणं पाटलीपुत्रिकाणां गणिकानां नियोगाद्दत्तकः पृथक्चकार । तत्प्रसङ्गाच्चारायणः साधारणमधिकरणं प्रोवाच । सुवर्णनाभः सांप्रयोगिकम् । घोटकमुखः कन्यासंप्रयुक्तकम् । गोनर्दीयो भार्याधिकारिकम् । गोणिकापुत्रः पारदारिकम् । कुचुमार औपनिषदिकम् । वात्स्यायनःसप्तभिरधिकरणैःसर्वं प्रोवाच । एवमनेकैराचार्यैः तच्छास्त्रं बाभ्रव्योक्तं खण्डशः प्रणीतमुत्सन्नकल्पमभवत् । एवमेते लोकहिताय कृतवन्तः । तथाहि । महतां प्रवृत्तिर्लोकहितायैव । यथा पञ्चानां भूतानां प्रवृत्तिः । प्रस्तुतिभाजो विश्वस्य स्त्रीपुंसात्मकस्योभाभ्यामेव निष्पन्नत्वात्कामस्य पुरुषार्थत्वेन च पितृऋणनिर्मोचनहेतुभूततया सन्ततिप्राप्त्या च महापुरुषप्रणीतत्वाच्च शास्त्रमिदं सर्वहितमिति कोक्कोकनामा कवीश्वरः स्वमतिवि-

भवेन रतिरहस्यं कृतवान् । यदि नन्दिकेश्वरादिप्रणीतेषु महाशास्त्रेषु विद्यमानेषु किमनेनेति चेत्तत्र नन्दिकेश्वरश्वेतकेतुबाभ्रव्यप्रणीतानां दुरध्येयत्वेन, दत्तकादिप्रणीतानां शास्त्रावयवानामेकदेशत्वेन, वात्स्यायनप्रणीतानां महत्त्वाद् गूढार्थत्वात्तर्कबाहुल्याद्बालानां दुर्ग्रहत्वेन च तेभ्यः सारमादाय प्रकाशितार्थं सर्वसुबोधमुपयुक्तंयशकलितमल्पमित्यादरणीयम् ॥

इह हि काव्यनाटकालङ्कारप्रभृतिसकलकलाकलापनिष्णातो वाग्विलासजितबृहस्पतिः कोक्कोकनामा कविः नन्दिकेश्वरश्वेतकेतुपाञ्चालदत्तकचारायणसुवर्णनाभघोटकमुखगोनर्दीयगोणिकापुत्रकुचुमारवात्स्यायनप्रभृतिभिः कृतेभ्यः शास्त्रेभ्यः सारमादाय रतिरहस्याख्यं ग्रन्थं प्रारभमाणः प्रस्तुतदेवतापूजया अविघ्नमिच्छन् मकरध्वजं स्तौति—

अनङ्गेनाबलासङ्गाज्जिता येन जगत्त्रयी ।
स चित्रचरितः कामः सर्वकामप्रदोऽस्तु वः ॥ १ ॥

अनङ्गेनेति । येन अनङ्गेन कामेन अबलासङ्गात्स्त्रीसाहचर्यात् जगत्त्रयी त्रयाणां जगतां समाहारःजगत्त्रयी त्रैलोक्यं जिता स्ववशीकृतेत्यर्थः । चित्रचरितः विचित्रचरित्रः स कामः मन्मथो वो युष्माकं सर्वकामप्रदः सकलमनोरथपूरकः अस्तु भवत्वित्यर्थः ॥ १ ॥

येनाकारि प्रसभमचिरादर्द्धनारीश्वरत्वं
दग्धेनापि त्रिपुरजयिनो ज्योतिषा चाक्षुषेण ।
इन्दोर्मित्रं स जयति मुदां धाम वामप्रचारो
देवः श्रीमान् भवरसभुजां दैवतं चित्तजन्मा ॥२॥

येनाकारीति । येन चित्तजन्मना त्रिपुरजयिनोऽर्द्धनारीश्वरत्वमकारि स जयतीति क्रियाकारकसम्बंधः । त्रिपुरविजयिनो महादेवस्य चाक्षुषेण चक्षुषो जातेन ज्योतिषा ललाटनेत्राग्निनेत्यर्थः । दग्धेन भस्मीकृतेनापि येन चित्तजन्मना मनसिजेन तस्यैव देवस्य अर्द्धनारीश्वरत्वमकारि कृतमित्यर्थः । प्रसभं हठात्, अचिरात्सद्य एव । अचिरादित्यस्य क्रियया सम्बन्धः । अनेन चित्तजन्मनः प्रभावः

संसारे पटलान्ततोयतरले सारं यदेकं परं
यस्यायं च समग्र एव विषयग्रामप्रपञ्चो मतः ।
तत्सौख्यं परतत्ववेदनमहानन्दोपमं मन्दधीः
को वा विन्दति सूक्ष्ममन्मथकलावैचित्र्यमूढो जनः ॥ ७ ॥

संसारइति । पटलान्ततोयतरले पटलं गृहच्छदिः 'प्रान्ते तु पटलं छदि' रित्यमरः । तस्यान्तः प्रान्तः तत्रस्थतोयतरले चञ्चले संसारे यदेकमेव परं सारं यस्य सौख्यस्यायं समस्तो विषयग्रामः शब्दादि प्रपञ्चो मतः । परतत्ववेदनमहानन्दोपमं परतत्वज्ञानोत्पन्न-महानन्दसदृशं तत्सौख्यं मन्दधीः मन्दबुद्धिः सूक्ष्ममन्मथकलावैचित्र्य मूढः अतिगुप्तमन्मथकलावैचित्र्यविकलः मूढः को वा जनः विन्दति। एतादृशं सौख्यं मन्मथकलावैचित्र्यज्ञानादेव लभते रतितन्त्रमूढो नैव जानातीत्यर्थः ॥ ७ ॥

मन्मथकलाज्ञानं विना सौख्यं लब्धुमशक्यमिति द्रढयति ।

जातिस्वभावगुणदेशजधर्मचेष्टा-
भावेङ्गितेषु विकलो रतितन्त्रमूढः ।
लब्ध्वापि हि स्खलति यौवनमङ्गनानां
किं नारिकेलफलमाप्य कपिः करोति ॥ ८ ॥

जातिरिति । जात्यादिविकलः जात्याद्यज्ञो यः स रतितन्त्रमूढः एवंविधो जनः अङ्गनानां यौवनं लब्ध्वापि स्खलति निश्चेष्टो भवति । तथाहि नारिकेलफलं प्राप्य कपिर्वानरः किं करोति न किमपि कर्तुं शक्नोतीत्यर्थः । जातिर्मृग्यादिः, स्वभावाद्यज्ञातगुणो बलिमध्यश्लथ-त्वादि, गुणो बाल्यादिः, देशजो लाटादिः, धर्मो वसन्तादिः चेष्टा गन्धर्वादिविज्ञानम्, भावः कामुकता, इङ्गितानि साध्यासाध्यमध्या-मध्यानुरक्तविरक्तानि ? ॥ ८ ॥

तत्र प्रथमं नन्दिकेश्वरगोणिकापुत्रयोर्मतमाद्यं
संग्रहिष्यामः, परतो वात्स्यायनीयम् ॥

यद्वात्स्यायनसूत्रसंग्रहबहिर्भूतं किमप्यागमे
दृष्टं ग्राह्यमिदं मया मुनिगिरां श्रद्धा हि साधारणी।
भावव्यञ्जितमन्यभङ्गिकथितं तत्रापि चेदस्ति तत्
मन्दानामुपयुज्यते तदपि हि स्पष्टाभिधेयाकृतिः ॥ ९ ॥

यद्वात्स्यायनेति। प्रथमं नन्दिकेश्वरस्येत्यादिग्रन्थस्य स्पष्टोऽर्थः। वात्स्यायनसूत्रसंग्रहबाहिर्भूतं वात्स्यायनोक्तसूत्रसङ्ग्रहाद् बहिर्भूतम् आगमे अन्यागमे दृष्टं किमपि यद्विद्यते मया तद्ग्राह्यं, मुनिगिरां साधारणी श्रद्धा, यतो मुनयः आगमकृतः अतस्तद्वचनेष्वपि श्रद्धा कार्येत्यर्थः। भावव्यञ्जितं भावेन सूचितम् अन्यभङ्गिकथितम् अन्यया भङ्ग्या रचनया कथितं यत्तदपि स्पष्टाभिधेयाकृतिश्चेन्मन्दानामुपयुज्यते। एवमुक्तं भवति तेषु कथित एवार्थः स्पष्टश्चेन्मन्दानां जडानां मन्दबुद्धीनामुपयुज्यते उपयोगमापद्यते ॥ ९ ॥

पद्मिनीं, तदनु चित्रिणीं, ततः शंखिनीं, तदनु हस्तिनीं, विदुः।
उत्तमा प्रथमभाषिता, ततो हीयते युवतिरुत्तरोत्तरम् ॥ १० ॥

पद्मिनीमिति। प्रथमं पद्मिनीं विदुः, तदनु चित्रिणीं विदुः, ततः शंखिनीं विदुः, तदनु हस्तिनीं विदुः। प्रथमभाषिता उत्तमा तत उत्तरोत्तरा युवतिरङ्गना हीयते हीना भवति। एवमुक्तं भवति पद्मिनी उत्तमा, ततश्चित्रिणी, ततः शंखिनी, ततो हस्तिनी ॥ १० ॥

इदानीं पद्मिनीलक्षणमुपपाद्यते।

कमलमुकुलमृद्वी फुल्लराजीवगन्धः
सुरतपयसि यस्याः सौरभं दिव्यमङ्गे।
चकितमृगदृशाभे प्रान्तरक्ते च नेत्रे
स्तनयुगलमनर्घ्यं श्रीफलश्रीविडम्बि ॥ ११ ॥

कमलमुकुलेति। कमलमुकुलमृद्वी पद्मकोरकान्तःप्रदेश इव कोमला, यस्याः सुरतपयसि रेतसि फुल्लराजीवगन्धः विकसितकमलगन्धः विद्यते, यस्या अङ्गे दिव्यं सौरभं, यस्या नेत्रे चकितमृगदृशाभे

कथितः। कीदृश इत्याह देवो दीव्यतीति देवः विजिगीषुः 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, इन्दोश्चन्द्रस्य मित्रं सखा सखिशब्दवाची मित्रशब्दो नियतं नपुंसकम्। पुनः कीदृशः, मुदां हर्षाणां धाम स्थानं हर्षस्थानमित्यर्थः। 'मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसम्मदाः' इत्यमरः। वामप्रचारोऽवार्यप्रचारः, यतो मुमुक्षूणां मनांसि चालयति तस्माद्वामप्रचारत्वम्। श्रीमान् कान्तिमान् श्रीशब्दोऽत्र शोभापर्यायः। भवरसभुजां भवः संसारस्तस्य यो रसः शृङ्गारादिः, रागश्च 'शृङ्गारादौ रसे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः। तस्य भुजां संसारसुखभोगोपपन्नानां संसारसुखानुभवेच्छूनां वा। दैवतं देवता यावता येन केनच नवरसानुबन्धेन येऽनुपहताधियस्तेषां दैवतम्। एवमुक्तं भवति ईश्वरललाटलोचनदहनज्वालादग्धेनापि येन शिवस्यार्द्धनारीश्वरत्वमकारि स चित्तजन्मा जयतीति चित्तजन्मनो माहात्म्यमनेन श्लोकेनोक्तमित्यर्थः। संसारसुखविमुखानामृषीणामपि मनांसि स बलादेव सुखाभिलाषेण भावयतीत्यर्थः॥ २॥

परिजनपदे भृङ्गश्रेणी, पिकाः पटुबन्दिनो,
हिमकरसितच्छत्रं, मत्तद्विपो मलयानिलः, ।
कृशतनुधनर्वल्ली लीलाकटाक्षशरावली,
मनसिजमहावीरस्योच्चैर्ज्जयन्ति जगज्जितः ॥३॥

पजिनपद इति। जगज्जितो जगज्जेतुः मनसिजमहावीरस्य मनसिजाख्यमहावीरस्य साधनान्येतानि जयन्ति शोभन्ते। उच्चैः अत्यन्तसाधनानि उन्नतसाधनानि। परिजनपदे भृङ्गश्रेणी परिजनस्थाने भृङ्गपङ्क्तिरित्यर्थः। पिकाः कोकिलाः पटुबन्दिनः। हिमकरसितच्छत्रं हिमकरश्चन्द्रः सितच्छत्रं श्वेतच्छत्रम्। मलयानिलो मत्तद्विपः मत्तगजः, कृशतनुः वामाङ्ग्येव धनुर्वल्ली चापवल्ली, लीलाकटाक्ष एव शरावलिः एव जगज्जेतुः साधनभूतानि एतानि जयन्तीत्यर्थः॥ ३॥

कोक्कोकनाम्ना कविना कृतोऽयं श्रीवैन्यदत्तस्य कुतूहलेन ।
विलोक्यतां कामकलासु धीराः ! प्रदीपकल्पो वचसां विगुम्फः॥४॥

कोकोकनाम्नेति । श्रीवैन्य [श्य] दत्तस्य राज्ञः कुतूहलेन कौतूहलेन रतिरहस्यज्ञानलोलुपेन राज्ञा चोदितेनेत्यर्थः । कोकोकनाम्ना कोकोक इति नाम्ना प्रसिद्धेन कविना कृतः, कामकलासु प्रदीपकल्पः दीपतुल्यः, प्रदीपो यथा सकलपदार्थदर्शनसाधनभूतस्तद्वदयमपि कामकलाज्ञानसाधनभूत इत्यर्थः । अयं वचसां विगुम्फः वचनरचना हे धीरा ! विद्वांसः विलोक्यताम् ॥ ४ ॥

भूयोभूयो मुनिवरगवीरर्थदुग्धानि दुग्ध्वा
निर्मथ्यार्थं प्रणिहितधिया सोयमादायि सारः ।
स्वादुः पथ्यो ललितरमणीयौवनाभोगभोग्यो
मुख्यो देवैरपि बहुमतः सेव्यतां पण्डितेन्द्राः ! ॥५॥

भूयोभूय इति । भूयोभूयः पुनः पुनः मुनिवरगवीः मुनिश्रेष्ठानां वाचः अर्थदुग्धानि अर्थाः दुग्धानीव तानि दुग्ध्वानिर्म्मथ्य अतिप्रणिहितधिया अतिसमाहितचित्तेन मया सोऽयं स्वादुर्मधुरः पथ्यो हितः ललितयुवतीयौवनाभोगभोग्यः ललितानां रमणीनां यौवनस्य आभोगेन विस्तारेण भोग्यः, मुख्यः श्रेष्ठः, देवैरमरैरपि बहुमतः अनुमतः सारः आदायि । अत्र गोशब्देन गावो वाचश्च कथ्यन्ते यथा गोदुग्धानि दुग्ध्वा निर्मथ्य सारः स्वीक्रियते तथैव मुनिवरोक्तशास्त्रार्थानालोच्य मया सारः उत्कृष्टोऽशः स्वीकृत इत्यर्थः । द्विकर्म्मकप्रयोगोऽयम् । मुनिवरगवीरित्यत्र गोरतद्धितलुकीति समासान्तः । तत-ष्टित्वाद् ङीपि कृते मुनिवरगवीरिति सिद्धम् । हे पण्डितेन्द्राः ! अयमेतादृशः सारो भवद्भिः सेव्यताम् ॥ ५ ॥

अस्य प्रयोजनमाह ।

असाध्यायाः सुखं सिद्धिः, सिद्धायाश्चानुरञ्जनम् , ।
रक्तायाश्च रतिः सम्यक् कामशास्त्रप्रयोजनम् ॥६॥

असाध्यायाइति । असाध्यायाः असंधानायाः अङ्गनायाः सुखं यथा तथा सिद्धिः वशीकरणम्, सिद्धायाश्चानुरञ्जनम् अनुरागोत्पादनम्, रक्तायाश्च सम्यग् रतिः । एतावदेव कामशास्त्रप्रयोजनम् ॥६॥

त्रस्तहरिणीनयनसदृशे, प्रान्तरक्ते च प्रान्तयोरक्ते लोहिते च भवतः यस्याः स्तनयुगलमनर्घ्यं रम्यं श्रीफलश्रीविडम्बि बिल्वफलसदृशं सा पद्मिनी ॥ ११ ॥

तिलकुसुमसमानां बिभ्रती नासिकां च
द्विजगुरुसुरपूजां श्रद्दधाना सदैव ।
कुवलयदलकान्तिः कापि चाम्पेयगौरी
विकचकमलकोशाकारकामातपत्रा ॥ १२ ॥

तिलकुसुमेति । या तिलकुसुमसमानां नासिकां बिभ्रती, या सदैव द्विजगुरुसुरपूजां श्रद्दधाना, या कुवलयदलकान्तिः, कापि चाम्पेयगौरी चम्पककुसुमगौरी । वर्णद्वयप्रचुरेत्यर्थः । 'षिद्गौरादिभ्य-श्चे'ति ङीष् । या विकचकमलकोशाकारकामातपत्रा विकसित-पद्मसदृशयोनिः । योनिः कामातपत्रमिति लाक्षणिकशब्दः ॥ १२ ॥

व्रजति मृदु सलीलं राजहंसीव तन्वी
त्रिवलिवलितमध्या हंसवाणी सुवेषा ।
मृदु शुचि लघु भुङ्क्ते मानिनी गाढलज्जा
धवलकुसुमवासोवल्लभा पद्मिनी स्यात् ॥ १३ ॥

व्रजतीति । या राजहंसीव मृदु सलीलं यथा तथा व्रजति,तन्वी कृशाङ्गी, या त्रिवलिवलितमध्या, या हंसवाणी, सुवेषा, मृदु अकठि नान्नप्रायं, शुचि शुद्धं लघु परिमितं च भुङ्क्ते, या मानिनी मानयुक्ता, "मानश्चित्तसमुन्नतिः" इत्यमरः । स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्या सङ्गिनि प्रिये इति वा । गाढलज्जा लज्जावती ॥ निर्लज्जा न भवती-त्यर्थः । धवलकुसुमवासोवल्लभा श्वेतकुसुमवस्त्रप्रिया कमलमुकुल-मृद्वीत्यादिविशेषलक्षिता पद्मिनी जातिरिति ज्ञातव्येत्यर्थः ॥ १३ ॥

चित्रिणीलक्षणमुच्यते

सुगतिरनतिदीर्घा नातिखर्वा कृशाङ्गी
स्तनजघनविशाला काकजङ्घोन्नतोष्ठी ।

मधुसुरभिरताम्बुः कम्बुकण्ठी चकोर-
स्वरवचनविभागा नृत्यगीतादिविज्ञा ॥ १४ ॥

सुगतिरिति । सुगतिः शोभनगमना, अनतिदीर्घा अतिदीर्घा न भवति, नातिखर्वा अतिखर्वा ह्रस्वा च न भवति, कृशाङ्गी, या स्तनजघनविशाला विशालस्तना, विशालजघना च, काकजङ्घा काकजङ्घा इव समजङ्घा, उन्नतोष्ठी मनाक् किञ्चिदतिरक्ताधरा, मधुसुरभिरताम्बुः मधुगन्धिरेतोजला, कम्बुकण्ठी कम्बुग्रीवा "रेखात्रयाङ्कितग्रीवा कम्बुग्रीवेति कथ्यते"। चकोरस्वरवचनविभागा चकोर स्वर इव वचनविभागो वचनविन्यासो यस्याः सा, नृत्यगीताद्यभिज्ञा आदिशब्दादन्येषामपि कलाविशेषाणां प्रायेण परिज्ञात्रीत्यर्थः ॥१४॥

मदनसदनमस्या वर्त्तुलोच्छूनमन्त-
र्मृदु मदनजलाढ्यं लोमभिर्नातिसान्द्रैः ।
प्रकृतिचपलदृष्टिर्बाह्यसंभोगरक्ता
रसयति मधुराल्पं चित्रिणी चित्ररक्ता ॥ १५ ॥

मदनसदनमिति । यस्या मदनसदनं स्मरमन्दिरं वर्त्तुलोच्छूनं वृत्तमुन्नतं च, अन्तर्मृदु, मदनजलाढ्यं रेतोभूयिष्ठं, नातिसान्द्रैः विरलैर्लोमभिरुपलक्षितम् । या प्रकृतिचपलदृष्टिः, बाह्यसम्भोगे बाह्यरते आलिङ्गनचुम्बनादौ रक्ता अनुरागिणी, मधुरं मधुरप्रायमल्पं रसयति आस्वादयति, चित्ररक्ता चित्रेषु चित्रवस्त्रमाल्यालङ्कारशिल्पेषु रक्ता सक्ता सा चित्रिणी वेद्या ॥१५॥

शङ्खिनीं लक्षयति ।

तनुरतनुरपि स्याद्दीर्घदेहाङ्घ्रिमध्या
ह्यरुणकुसुमवासः काङ्क्षिणी कोपशीला ।
अनिभृतशिरमङ्गं दीर्घनिम्नं वहन्ती
स्मरगृहमतिलोम क्षारगन्धि स्मराम्बु ॥ १६ ॥

तनुरतनुरिति । तनुः स्यात् अतनुरपि स्यात् । दीर्घदेहाङ्घ्रिमध्या देहो दीर्घः, अङ्घ्री च दीर्घौ, मध्यं च दीर्घम्, अरुणकुसुमवासःकाङ्क्षिणी, कोपशीला, अनिभृतशिरम् अगूढशिराजालं दीर्घनिम्नम् अङ्गं वहन्ती, यस्याः स्मरगृहम् अतिलोम रोमाढ्यं, स्मराम्बु रेतः क्षारगन्धि । संप्रयोगे सुरते यथायोग्यं भुङ्क्ते इत्यर्थः ॥१६॥

सृजति बहुनखाङ्कं संप्रयोगे लघीयः-
स्मरसलिलपृषत्का किंचिदुत्तप्तगात्री ।
न लघु न बहु भोक्त्री प्रायशः पित्तला स्यात्
पिशुनमलिनचित्ता शङ्खिनी रासभोक्तिः ॥ १७ ॥

सृजतीति । संप्रयोगे रते बहुनखाङ्कं बहुनखलाञ्छनं सृजति । संप्रयोगे मैथुने लघीयःस्मरसलिलपृषत्का अतिलघुस्मरजलशीकरा, कीञ्चिदुत्तप्तगात्री ईषदुष्णप्रायाङ्गी, न लघु न बहु भोक्त्री, प्रायशः पित्तला स्यात्पित्तप्रकृतिर्भवति । पिशुनमलिनचित्ता, रासभोक्तिः गर्दभवाणी, या एवंविधा सा शङ्खिनी ज्ञेया ॥ १७ ॥

अथ हस्तिनीं लक्षयति ।

अललितगतिरुच्चैः स्थूलवक्राङ्गुलीकं
वहति चरणयुग्मं कन्धरां ह्रस्वपीनाम् ।
कपिलकचकलापा क्रूरचेष्टातिपीना
द्विरदमदविगन्धिः स्वाङ्गकेऽनङ्गके च ॥ १८ ॥

अललितगतिरिति । या अललितगतिः, असुन्दरगतिः, उच्चैः स्थूलवक्राङ्गुलीकं चरणयुगं वहति, ह्रस्वपीनां ह्रस्वां पीवरां च कन्धरां वहति, कपिलकचकलापा कपिलकेशोच्चया क्रूरचेष्टा वा, अतिपीना अतीवपीनाङ्गी, स्वाङ्गके अनङ्गके स्मरमन्दिरे च द्विरदमदगन्धिः गजमदसमानगन्धिः । अत्र उपमानाच्चेति गन्धशब्दस्य समासान्त इकारः ॥ १८ ॥

द्विगुणकटुकषायप्रायभुग् वीतलज्जा
ललदतिविपुलोष्ठी दुःखसाध्या प्रयोगे ।

बहिरपि बहुरोमात्यन्तमन्तर्विशालं
वहति जघनरन्ध्रं हस्तिनी गद्गदोक्तिः ॥१९॥

द्विगुणकटुकषायेति । द्विगुणकटुकषायप्रायभुक् अतिमात्रभोजिनी कटुकषायप्रायभोजिनी चेत्यर्थः । वीतलज्जा निर्लज्जा, ललदतिविपुलोष्ठी ललद्विपुलाधरा, प्रयोगे सुरते दुःखसाध्या कृच्छ्रसाध्या, बहिरपि बहुरोमा, अपिशब्देन अङ्गवराङ्गयोरित्यर्थः । अन्तर्विशालं जघनरन्ध्रं जघनमध्यं स्मरमन्दिरं वहति । गद्गदोक्तिः गद्गदभाषिणी, एवंभूता हस्तिनी वेद्या । चतुर्णां लक्षणम् "पद्मिनी पद्मगन्धा स्यान्मधुगन्धा च चित्रिणी । शङ्खिनी क्षारगन्धा स्यान्निम्बगन्धा च हस्तिनी"ति ॥ १९ ॥

नयनयुगशरर्त्तुब्रध्नदिङ्नागसङ्ख्या-
स्तिथय इह रते स्युः प्रीतये चित्रिणीनाम् ।
ग्रहतिथिभुवनाख्यद्वीपयुक्ताः करिण्या-
स्तदितरतिथयः स्युः शङ्खिनीनां चतस्रः ॥२०॥

नयनयुगेति । इह जातिषु मध्ये चित्रिणीनां प्रीतये नयनयुगशरर्त्तुब्रध्नदिङ्नागसंख्याः तिथयः स्युर्भवन्ति । नयनं द्वितीया, युगं चतुर्थी, शरः पञ्चमी, ऋतुः षष्ठी, ब्रध्नो द्वादशी, दिग् दशमी, नागः अष्टमीत्येतेषु चित्रिण्यः सुरतेन तृप्यन्तीतियावत् । ग्रहो नवमी, तिथिः पञ्चदशी, भुवनाख्या चतुर्दशी, द्वीपः सप्तमी, एताः करिण्याः प्रीतये भवन्ति । चतस्र इतरतिथयः शङ्खिनीनां प्रीतये भवन्ति, प्रतिपत्, तृतीया, एकादशी, त्रयोदशी । एताः शङ्खिनीप्रीतये भवन्तीत्यर्थः, उक्तेष्वनुक्तेषु च दिवसेषु उक्तानां चित्रिणीहस्तिनीनां सुरते प्रीतिर्भवतीत्यर्थः ॥ २० ॥

पङ्कजासनलयेन पद्मिनीं वेणुदारितपदेन शङ्खिनीम् ।
स्कन्धपादयुगलेन हस्तिनीं नागरेण रमयन्ति चित्रिणीम् ॥२१॥

पङ्कजासनेति । पद्मिनीं पङ्कजासनलयेन करणेन रमयन्ति, वेणुदारितपदेन शङ्खिनीं रमयन्ति, हस्तिनीं स्कन्धपादयुगलेन रमयन्ति, चित्रिणीं नागरेण रमयन्ति । लीयन्ते अङ्गान्यत्रेति लयः करणं बन्धविशेष इति यावत् । करणलक्षणमुत्तरत्र विविच्य वक्ष्यति॥२१॥

व्रजति रतिसुखार्थं चित्रिणीमग्रयामे
भजति दिनरजन्योर्हस्तिनीं च द्वितीये ।
गमयति च तृतीये शङ्खिनीमार्द्रभावं
रमयति रमणीयां पद्मिनीं तुर्ययामे ॥२२॥

व्रजतीति । रतिसुखार्थं सुरतसुखाय चित्रिणीं दिनरजन्योरग्रयामे व्रजति, पुरुष इत्यध्याहार्यम् । दिनाग्रयामे रजन्यग्रयामे च । दिनरजन्योर्द्वितीये यामे हस्तिनीं व्रजति, दिनरजन्योस्तृतीये यामे शङ्खिनीमार्द्रभावं गमयति प्रापयति, अमन्तत्वान्मित्त्वाद् ह्रस्वत्वम् । आर्द्रहृदयां करोतीत्यर्थः । दिनरजन्योस्तुर्ययामे रमणीयां पद्मिनीं रमयति ॥ २२ ॥

इत्थं जात्यनुकूलतिथिकरणान्युक्त्वा तद्वशीकरणौषधान्याह–

मोचाकन्दरसेन जातिफलकं कुर्याद्वशां चित्रिणीं
पत्त्रौ माक्षिकसंयुतौ च करिणीं पारावतभ्रामरौ ।
शङ्खिन्या वशकृच्च गन्धतगरीमूलान्वितं श्रीफलं
ताम्बूलेन सह प्रदत्तमचिरान्मन्त्रैरमीभिः क्रमात् ॥२३॥

मोचेति । मोचाकन्दः कदलीकन्दः 'रम्भामोचांशुमत्फला' इत्यमरः । तद्रसेन सह जातिफलकं जातीफलं ताम्बूलेन सह दत्तं चित्रिणीं वशां कुर्यात् । माक्षिकसंयुतौ क्षौद्रसंयुक्तौ पारावतभ्रामरौ पारावतभ्रमरसम्बन्धिनौ पत्त्रौ भस्मीकृतौ ताम्बूलेन दत्तौ करिणीं हस्तिनीं वशां वशवर्त्तिनीं कुर्यात् । कलरवभ्रमरगरुन्ती भस्मीकृत्य मधुना संमिश्र्य योजयेदित्यर्थः । 'पारावतः कलरवः' 'गरुत्पत्त्रच्छदाः' इति चामरः । गन्धतगरीमूलान्वितं श्रीफलं ताम्बूलदत्तं शङ्खिन्या वशकृत् । जातिसम्प्रदायक्रमादमीभिर्वक्ष्यमाणैर्मन्त्रैर्दत्तमित्यन्वयः । मन्त्राः संप्रदायेन ज्ञेयाः ॥ २३ ॥

"ओं पच पच विहङ्गम विहङ्गम कामदेवाय स्वाहा" अनेन मन्त्रेण कदलीकन्दरसं जातीफलं ताम्बूलेन सह दद्यात्तदा चित्रिणी वश्या भवेत् । "ओं छिन्धि छिन्धि वश्यंकरि वश्यं-

करि वश्यंकरि कामदेवाय स्वाहा" अनेन मन्त्रेण पारावतभ्रमरस्य पक्षौ मधुयुक्तौ ताम्बूलेन देयौ तदा हस्तिनी वश्या भवेत्। "ओं हर हर पच कामदेवाय स्वाहा" अनेन मन्त्रेण गन्धतगरस्य मूलं बिल्वसहितं देयं तदा शङ्खिनी वश्या भवेत् ॥

इति श्रीरतिरहस्ये जात्यधिकारो नाम प्रथमः परिच्छेदः ॥ १ ॥



ॐ पच २ विहङ्गम २ ॐ कामदेवाय स्वाहा अनेन चित्रिण्यै। ॐ चण्डीः ॐ कामदेवाय स्वाहा अनेन मन्त्रेण हस्तिन्यै। ॐ हर ॐ पच ॐ कामदेवाय ठः ठः अनेन मन्त्रेण शङ्खिन्यै। क्रमादेतान्मन्त्रान् उच्चार्य उक्त्वा ताम्बूलेन दत्तं वशीकरं भवतीत्यर्थः। उत्तमजातित्वात् पद्मिन्यां नियमावेतावनुक्तावाचारात् ॥

इति श्रीकाञ्चीनाथकृतायां रतिरहस्यदीपिकायां जात्यधिकारो नाम प्रथमः परिच्छेदः ॥





अथेदानीं सर्वजातिसाधारणी चन्द्रकला निरूप्यते।

अङ्गुष्ठे, पद-गुल्फ-जानु-जघने, नाभौ च, वक्षःस्तने,
कक्षा-कण्ठ-कपोल-दन्तवसने, नेत्रालिके, मूर्द्धनि।
शुक्लाशुक्लविभागतो मृगदृशामङ्गेष्वनङ्गस्थिती–
रूर्ध्वाधोगमनेन वामपदतः पक्षद्वये लक्षयेत् ॥१॥

अङ्गुष्ठेति। दक्षिणपादाङ्गुष्ठमारभ्य आशिरः उक्तपञ्चदशस्थानेषु अङ्गुष्ठादिषु शुक्लपक्षप्रतिपदमारभ्य यावत्पूर्णिमा तावदनङ्ग आरोहति। कृष्णपक्षे प्रतिपदमारभ्य वामभागे मस्तकादङ्गुष्ठपर्यन्तं क्रमेणाऽवरोहति ॥ १ ॥

तेन रूपेण केशाकर्षणाद्युच्यते।

के गृह्णन्ति कचान्, ललाटनयने चुम्बन्ति, दन्तच्छदं
दन्तोष्ठेन निपीडयन्ति, बहुशश्चुम्बन्ति गण्डस्थलीम्।
कक्षाकण्ठतटं लिखन्ति नखरैः, गृह्णन्ति गाढं स्तनौ,
मुष्ट्या वक्षसि ताडयन्ति, ददते नाभौ चपेटां शनैः ॥२॥

के गृह्णन्तीति। के शिरसि कचान् गृह्णन्ति केशाकर्षणं कुर्वन्तीत्यर्थः। 'कं शिरोऽम्बुनोः' इत्यमरः। ललाटनयने चुम्बन्ति ललाटचुम्बनं नयनचुम्बनं च कुर्वन्ति। दन्तच्छदमधरं दन्तोष्ठेन निपीडयन्ति। दन्तोष्ठेन दन्तयुक्तेन ओष्ठेन पीडनं नाम अधरपानं दन्तक्षतकर्मोच्यते। गण्डस्थलीं चुम्बन्ति। बहुश इति सर्वत्रान्वयः। कक्षाकण्ठतटं नखरैर्लिखन्ति। अत्र तटशब्देन पार्श्वमुच्यते। स्तनौ गाढं दृढं गृह्णन्ति। मुष्ट्या वक्षस्युरसि ताडयन्ति घ्नन्ति। शनैर्मन्दं नाभौ चपेटां स्फोटां ददते ददति कामुका इत्यर्थः ॥ २ ॥

कुर्वन्ति स्मरमन्दिरे करिकरक्रीडां स्त्रियो जानुनी
गुल्फाङ्गुष्ठपदानि च प्रतिमुहुर्निघ्नन्ति तैरात्मनः।
इत्येवं कलयन्ति ये शशिकलामालिङ्ग्य मज्जन्ति ते
शीतांशूपलपुत्रिकां शशिकरस्पृष्टामिव प्रेयसीम् ॥३॥

कुर्वन्तीति । स्मरमन्दिरे करिकरक्रीडां कुर्वन्ति । कामुका इत्यध्याहार्य्यम् । उक्तपञ्चदशस्थानेषु जघनस्योक्तत्वाद् जघनमेव स्मरमन्दिरमित्यर्थाल्लभ्यते । स्त्रियः जानुनी गुल्फाङ्गुष्ठपदानि च प्रतिपदं मुहुर्मुहुः आत्मनस्तैर्निघ्नन्ति आत्मनो जानुगुल्फाङ्गुष्ठपदैः प्रतिपदं ताडयन्ति इत्युक्तप्रकारेण ये कामुकाः शशिकलां कलयन्ति जानन्ति ते प्रेयसीं स्फुटं द्रावयन्ति शशिकरस्पृष्टां चन्द्रकिरणस्पृष्टां शीतांशूपलपुत्रिकां चन्द्रकान्तशिलापुत्रिकामिव द्रावयन्तीत्यर्थः ॥ ३ ॥

एकारौकारयुक्ता हरिहरजहराः पञ्चबाणाः स्मरस्य
ख्याता लक्ष्याण्यमीषां हृदयकुचदृशो मूर्धगुह्ये क्रमेण ।
मर्मस्वेतेषु भूयो निजनयनधनुःप्रेरितैस्तैः पतद्भिः
स्यन्दन्ते सुन्दरीणांज्वलदनलनिभैर्बिन्दवःकामवाराम् ॥४॥

एकाराविति । एकारौकारयुक्ता एकारौकारसहिता हरिहरजहरा हरिः अकारः, हरज इकारः, हर उकारः, एतानि पञ्चाक्षराणि स्मरस्य कामस्य पञ्चबाणाः ख्याताः प्रसिद्धाः, अमीषां पञ्चानां बाणानां लक्ष्याणि शरव्याणि उच्यते । क्रमेण हृदयकुचदृशो मूर्धगुह्ये हृदयकुचनयनमस्तकगुह्येषु प्रयोजयेदित्यर्थः । एतेषु हृदयकुचदृङ्मस्तकगुह्येषु मर्म्मसु स्त्रिया निजनयनधनुःप्रेरितैः स्वनयनकार्मुकविसृष्टैः पतद्भिर्ज्वलदनलनिभैर्ज्वलदग्निकणसदृशैर्बाणैः सुन्दरीणामङ्गनानां कामवारां स्मरजलानां बिन्दवः स्यन्दन्ते स्रवन्ति । पूर्वोक्तैकारादिपञ्चबाणान् सबिन्दूनग्निकणसमानान् ध्यात्वा हृदयादिषु पञ्चसु स्थानेषु नयनाभ्यां पश्येत् । अनन्तरमङ्गनां द्रावयतीत्यर्थः ॥ ४ ॥

संक्षेपादिति नन्दिकेश्वरमतात्तत्वं किमप्युद्धृतं
गोणीपुत्रकभाषितोऽयमधुना संक्षिप्यते विस्तरः ।
मूर्द्धोरःस्थलवामदक्षिणकरे वक्षोरुहोरुद्वये
नाभीगुह्यललाटजाठरकटीपृष्ठेषु तिष्ठत्यसौ ॥५॥

संक्षेपादिति । इति पूर्वोक्तप्रकारेण संक्षेपात्समासतः नन्दिकेश्वरमतात् नन्दिकेश्वरकृतशास्त्रात्किमपि तत्त्वं सारं समुद्धृतं स्वाकृतं कथितमित्यर्थः। अधुना गोणीपुत्रकभाषितः गोणिकापुत्रकृतः

अयं वक्ष्यमाणः विस्तरः शब्दप्रपञ्चः संक्षिप्यते संक्षिप्य कथ्यते। शब्दस्य प्रपञ्चो विस्तरः 'स तु शब्दस्य विस्तरः' इत्यमरः। मूर्द्धोरःस्थलवामदक्षिणकरे मूर्द्धा शिरः, उरःस्थलम्, वामकरः, दक्षिणकरश्च, वक्षोरुहद्वयम्, ऊरुद्वयम्, नाभी, गुह्यम्, ललाटः, जाठरकटीपृष्ठम्, कक्षा, श्रोणिर्जघनम्, भुजे चेत्युत्तरेणापि सम्बन्धः, एषु मदनस्तिष्ठति ॥ ५ ॥

कक्षाश्रोणिभुजेषु च प्रतिपदं प्रारभ्य कृष्णामथ
श्वेतायाः प्रभृति क्रमेण मदनो मूर्द्धानमारोहति।
अङ्गेष्वेषु मृगीदृशां मनसिजप्रस्तावनापण्डिता
मात्राःषोडश चिन्तयन्तिबहलज्योतिःस्फुलिङ्गाकृतीः ॥६॥

कक्षाश्रोणीति। एषु षोडशस्थानेषु कृष्णां प्रतिपदमारभ्य कृष्णपक्षप्रतिपदमारभ्य मदनः अधः अवरोहति। श्वेतायाः प्रतिपदः प्रभृति क्रमेण मदनो मूर्द्धानं शिरः आरोहति। एषु मृगीदृशाम् अङ्गनानामङ्गेषु मनसिजप्रस्तावनापण्डिताः स्मरविन्यासनिपुणाः कामुका बहलज्योतिःस्फुलिङ्गाकृतीः बहलं ज्योतिर्येषां ते बहलज्योतिषः ते च ते स्फुलिङ्गाश्च अग्निकणाः तदाकाराः षोडशमात्राः अकारादिषोडशस्वरान् सबिन्दूंश्चिन्तयन्ति तस्मात्कामस्याधिष्ठानं ज्ञात्वा अकारमारभ्य षोडशमात्राः स्त्रियाः अङ्गे चिन्तयेत् आरोहादवरोहात् ताः स्पृशेदिति ॥ ६ ॥

कण्ठे संश्लिष्य गाढंशिरसिविदधतश्चुम्बमोष्ठौ रदाग्रै-
रापीड्याचुम्ब्यगण्डौ विरचितपुलकाःपृष्ठतः पार्श्वयोश्च।
दत्वा सूक्ष्मं नखाङ्कं मृदुकरजमुखैरञ्चयन्तो नितम्ब-
प्राग्भारं मन्दसीत्काःप्रतिपदि युवतीं नागरा द्रावयन्ति ॥ ७ ॥

कण्ठे संश्लिष्येति। यत् नागराः कामुकाः प्रतिपदि तिथौ कण्ठे गाढं संश्लिष्य गाढालिङ्गनं कृत्वा शिरसि चुम्बनं विदधते ललाटचुम्बनं कुर्वते इत्युद्देशः। ओष्ठौ रदाग्रैः दन्ताग्रैरापीड्य पीडयित्वा गण्डावाचुम्ब्य कपोलचुम्बनं कृत्वा पृष्ठतः पृष्ठे पार्श्वयोश्च विरचितपुलकाः कृतरोमाञ्चाः सूक्ष्मं नखाङ्कं नखपदं दत्वा मृदुकर-

जमुखैर्मृदुनखाग्रैर्नितम्बप्राग्भारमश्नुयन्तः सम्भावयन्तः, एवंकृते सति मन्दसीत्का मृदुसीत्कारा युवतीस्तरुणीर्द्रावयन्ति ॥ ७ ॥

स्तनमिलनसुखार्त्तो गण्डपालीं विचुम्बन्
नयनकुचयुगं चाकृष्य पार्श्वं नखाग्रैः ।
अधरमवलिहन् दोर्मूलचञ्चन्नखाग्रः
कृतघनपरिरम्भो द्रावयेदह्नि युग्मे ॥ ८ ॥

स्तनमिलनेति । युग्मे अह्नि द्वितीयायां स्तनमिलनसुखार्त्तः स्तनस्पर्शजातेन सुखेन आर्त्तः परवशः, गण्डपालीं कपोलपालीं नयनकुचयुगं च चुम्बन्, पार्श्वं नखाग्रैः आकृष्य अधरमवलिहन्, दोर्मूलचञ्चन्नखाग्रःकक्षातटे व्यापृतनखाङ्कुरः सन् कृतघनपरिरम्भः गाढमालिङ्गन् द्रावयति ॥ ८ ॥

तृतीयायां श्लिष्यन्निबिडतममासाद्य पुलकं
मुहुर्बाह्वोर्मूले मृदुलिखितपार्श्वः कररुहैः ।
भुजापीडं कण्ठे दशनवसनास्वादतरलः
स्तनोपान्तारब्धच्छुरितमबलां विह्वलयति ॥ ९ ॥

तृतीयायामिति । तृतीयायां तिथौ श्लिष्यन्नालिङ्गन् निबिडतमं निबिडतमविधानं यथा तथा पुलकमासाद्य रोमाञ्चं विन्यस्य मुहुर्वारंवारंबाह्वोर्मूले कररुहैर्मृदुविलिखितपार्श्व,नखैर्विलिखितपार्श्वो, कण्ठे भुजापीडं कण्ठे स्वभुजमुपधानं कुर्वन्नित्यर्थः।भुजाभ्यामापीड्येति वा णमुलि । दशनवसनास्वादतरलो दशनच्छदचुम्बनचटुलः कामुकः स्तनोपान्तारब्धच्छुरितं स्तनपार्श्वकृतच्छुरितं यथा तथा अबलां विह्वलयति विह्वलां करोति । छुरितकलक्षणम् "अङ्गुष्ठजाग्रनखताडनतो नखानां गण्डस्तनाधरगमाच्छुरितं वदन्ति" ॥९॥

चतुर्थ्यामालिङ्ग्य स्फुटमलघुसंपीडितकुचा
दशन्तो बिम्बोष्ठं नखलिखितवामोरुफलकाः ।
ददन्तो दोर्मूले छूरितमसकृन्नीरजदृशः
शरीरे क्रीडन्ति स्मररसनदीनिर्झरजलैः ॥ १० ॥

चतुर्थ्यामिति। चतुर्थ्यां तिथावालिङ्ग्य स्फुटं यथा तथा अलघुसंपीडितकुचाः करैर्दृढं पीडितकुचाः, बिम्बोष्ठं दशन्तः दशनैरधरं दंशयन्तः, नखलिखितवामोरुफलकाः वामोरौ नखान् कृत्वा दोर्मूले छुरितं नखविशेषं ददन्तः प्रयच्छन्तः कामुकाः, नीरजदृशः सरोरुहाक्ष्याः शरीरे स्मररसनदीनिर्झरजलैः स्मरेणोद्भूतरसनदीनिर्झरजलैः असकृत् क्रीडन्ति एवं कृते सति निर्झरजलवत् स्यन्दो जायत इत्यर्थः ॥ १० ॥

पञ्चम्यां चिकुरानदक्षिणकरेणाकृष्य दष्ट्वाऽधरं
दत्त्वा चूचुकयोः सखेलपुलकं चुम्बेत्कुचौ भावतः।
षष्ठ्यां गाढविगूढगात्रमधरं दष्ट्वाऽथ नाभीतले
प्रारब्धच्छुरितो लिखेत्कररुहैरुर्वोस्तटीरुन्मदः ॥ ११ ॥

पञ्चम्यामिति। पञ्चम्यां तिथौ चिकुरान् केशान् अदक्षिणकरेण वामकरेणाऽऽकृष्य अधरं दष्ट्वा चूचुकयोः स्तनाग्रयोः सखेलं पुलकं दत्त्वा कुचौ भावतः लीलया चुम्बेत्। षष्ठ्यां च गाढविगूढगात्रं यथा भवति तथा अधरं दष्ट्वा नाभीतले प्रारब्धच्छुरितः कृतच्छुरिताङ्कनख इत्यर्थः। छुरितलक्षणं पूर्वमेव १६ पृष्ठे कथितम्। उन्मदः कामुकः कररुहैरूर्वोस्तटं लिखेत् एवंकृते सति रमणी सद्रवा भवति ॥११॥

मृदितमदनवासो दन्तवासो लिहानः
करजकलितकण्ठोपान्तवक्षःकपोलः।
कृतघनपरिरम्भः संभृतानङ्गरङ्गो
गमयति मृदुभावं भामिनीमह्नि भानोः ॥ १२ ॥

मृदितेति। भानोरहनि सप्तम्यां मृदितमदनवासः करमृदितमदनवासः, दन्तवासः अधरं लिहानः, करजकलितकण्ठोपान्तवक्षःकपोलः करजैर्नखैः कण्ठोपान्तं वक्षः कपोलौ च आलिखति, कृतघनपरिरम्भः कृतगाढालिङ्गनः, संभृतानङ्गरङ्गः संभृतसुरतः भामिनीं मृदुभावं गमयति मृदुतां नयति द्रावयतीत्यर्थः ॥ १२ ॥

अष्टम्यां परिरभ्य कण्ठमसकृन्नाभिं नखैरञ्चयन्
दष्टौष्ठः पुलकं ददत्कुचतटीं चुम्बेद्विमृद्योच्चकैः ।
नाभीमूलविलोलपाणिरधरं दष्ट्वा स्तनौ पीडयन्
मृद्गीयाद् मदनालयं च विलिखन् पार्श्वं नवम्यां नखैः॥१३॥

अष्टम्यामिति । अष्टम्यां तिथौ कण्ठं परिरभ्य असकृन्नाभिं नखैरञ्चयन्, दष्टौष्ठः पुलकं रोमाञ्चं ददद्यच्छन्, कुचतटीं विमृद्य चुम्बन् द्रावयति । नवम्यां नाभीमूलविलोलपाणिः नाभीमूलकृतपाणिप्रचारः, अधरं दष्ट्वा स्तनौ पीडयन्नखैः पार्श्वं विलिखन् मदनालयं स्मरमन्दिरं च मृद्गीयात् करेण स्पृशेदित्यर्थः । एवं नवम्यां कुर्वन् द्रावयति ॥ १३ ॥

ललाटमाचुम्ब्य नखैर्लिखन्तः शिरोधरां भ्रामितवामहस्ताः ।
कटिस्तनोरःस्थलपृष्ठमध्ये स्मरं दशम्यां प्रतिबोधयन्ति ॥१४॥

ललाटेति । दशम्यां ललाटमाचुम्ब्य ललाटचुम्बनं कृत्वा नखैः शिरोधरां ग्रीवां लिखन्तः, कट्यां, स्तनयोः, ऊर्वोः, श्रवणयोः, पृष्ठमध्ये च भ्रामितवामहस्ताः भ्रामितवामकराः, कामुकाः स्मरं प्रतिबोधयन्ति ॥ १४ ॥

एकादश्यां करजकलितग्रीवमालिङ्ग्य गाढं
पायं पायं दशनवसनं किंचिदालीढलोलम् ॥
घातं घातं हृदि सहसितं मन्मथागारमुद्रा-
भङ्गक्रीडातरलितकराः कामिनी द्रावयन्ति ॥ १५ ॥

एकेति । एकादश्यां तिथौ करजकलितग्रीवं नखकलितकण्ठं यथा भवति तथा आलिङ्ग्य किंचिदालीढलोलं दशनवसनमधरं गाढं पायं पायं पीत्वा पीत्वा हृदि सहसितं सस्मितं घातंघातम् आहत्याहत्य मन्मथागारमुद्राभङ्गक्रीडातरलितकराः स्मरगृहरन्ध्रप्रविष्टतरलाङ्गुलयः कामुकाः कामिनीं द्रावयन्ति ॥ १५ ॥

द्वादश्यां परिरभ्य गाढमसकृच्चुम्बन् कपोलौ दृशो-
रुन्मेषं विदधीत सीत्कृतिजुषो व्यादष्टदन्तच्छदः ॥
चुम्बन् गण्डतटीं मनोभवतिथौ मृद्नन् ससीत्कं कुचौ
कान्तां द्रावयति द्रुतं कररुहैर्भिन्दन् शनैः कन्धराम् ॥१६॥

द्वादश्यामिति । द्वादश्यां गाढमसकृत्परिरभ्य कपोलौ चुम्बन्, व्यादष्टदन्तच्छदः दष्टाधरःसन् सीत्कृतिजुषस्तस्या दृशोरुन्मेषमुन्मीलनं विदधीत कुर्यात् । मनोभवतिथौ त्रयोदश्यां गण्डतटीं कपोलतटीं चुम्बन्, ससीत्कं सीत्कारसहितं कुचौ मृद्नन्, कराभ्यां मर्दयन्, कररुहैः शनैः कन्धरां भिन्दन्, कामुकः कान्तां द्रावयति ॥ १६ ॥

कन्दर्पारितिथौ विचुम्बितदृशो दोर्मूलचञ्चन्नखाः
कामागारनिवेशितद्विपकराः क्रीडन्ति कान्तातनौ ॥
दर्शे पूर्णतिथौ च नर्तितनखाः स्कन्धस्थलीरङ्गतोऽ
नङ्गागारचुचूलिकाञ्चितकराः कुर्युः स्त्रियं विह्वलाम् ॥१७॥

इति श्रीरतिरहस्ये चन्द्रकलाधिकारो नाम द्वितीयः परिच्छेदः॥२॥



कन्दर्पेति । कन्दर्पारितिथौ चतुर्दश्यां विचुम्बितदृशो विचुम्बितनयनाः, दोर्मूलचञ्चन्नखाः बाहुमूले नखाङ्कं कुर्वन्तः, स्मरागारे स्मरमन्दिरे निवेशितद्विपकराः कृतकरिकरक्रीडाः कामुकाः कान्तातनौ क्रीडन्ति कामिनीशरीरे क्रीडन्ति । अमावास्यायां पूर्णतिथौ पूर्णिमायां च स्कन्धस्थलीरङ्गतः स्कन्धस्थलीरङ्गे इत्यर्थः । सप्तम्यर्थे सार्वविभक्तिकस्तसिः । नर्तितनखाः नर्तकस्य रङ्गस्थलेन भाव्यमिति तथोक्तम् । अनङ्गागारचुचूलिकाञ्चितकराः अनङ्गागारे स्मरमन्दिरे चूचुकयोश्च अञ्चितकराः कामुकाः स्त्रियं विह्वलां कुर्युः ॥ १७ ॥

इति श्रीकाञ्चीनाथकृतायां रतिरहस्यदीपिकायां
चन्द्रकलाधिकारो नाम द्वितीयः परिच्छेदः ॥ २ ॥



उद्धृतसारं नन्दिकेश्वरगोणिपुत्रयोर्मतं प्रदर्श्य इदानीं
वात्स्यायनीयं मतमवतार्यते ।

आरोहपरिणाहाभ्यां षण्नवद्वादशाङ्गुलैः ॥
गुह्यैः शशो वृषोऽश्वो ना हरिण्यश्वेभिकाः स्त्रियः ॥१॥

आरोहेति । आरोहपरिणाहाभ्याम् आरोहः दैर्घ्यं, परिणाहः विशालता ताभ्यां षण्नवद्वादशाङ्गुलैः गुह्यैः क्रमान्ना पुरुषःशशः,वृषः, अश्वः, षडङ्गुलगुह्यः शशः, नवाङ्गुलगुह्यो वृषः । द्वादशाङ्गुलगुह्योऽश्वः, परिणाहेन षडङ्गुलगुह्या हरिणी, नवाङ्गुलगुह्या अश्वा, द्वादशाङ्गुलगुह्या इभिका इति ॥ १ ॥

अथ स्त्रियः कथ्यन्ते ।

हरिणीशशयोर्योगे वडवावृषयोस्तथा ॥
हस्तिनीहययोश्चैव मतं समरतं त्रयम् ॥ २ ॥

हरिणीति । हरिणीशशयोर्योगे समरतं वदन्ति । हरिणी षडङ्गुलगुह्या, शशश्च षडङ्गुलगुह्यः, वडवावृषयोर्योगे च समरतम्, हस्तिनीहययोश्च योगे समरतम् एवं समरतं त्रयम् ॥ २ ॥

मृगीवृषं च वडवाहयमुच्चरतं द्वयम् ॥
नीचद्वयं च वडवाशशकं हस्तिनीवृषम् ॥ ३ ॥
अत्युच्चमतिनीचं च मृग्यश्वं हस्तिनीशशम् ॥
इति प्रमाणभेदेन नवधा रतमूचिरे ॥ ४ ॥

मृगीति । मृगीवृषं वडवाहयं चोच्चरतं द्वयं, पुरुषस्य स्त्र्यपेक्षया उच्चगुह्यत्वात् तथोक्तिः । वडवाशशकं, हस्तिनीवृषं च द्वयं नीचरतं, षडङ्गुलगुह्याया अङ्गनाया नवाङ्गुलगुह्येन पुरुषेण सह संयोगे सति उच्चरतम्, नवाङ्गुलगुह्याया द्वादशाङ्गुलगुह्येन पुरुषेण संयोगे अत्युच्चरतम्, एवं नीचरतद्वयञ्च भवति । मृग्यश्वमत्युच्चं षडङ्गुलगुह्याया द्वादशाङ्गुलगुह्येन योगात् । हस्तिनीशशमतिनीचं द्वादशाङ्गुलगुह्यायाः षडङ्गुलगुह्येन योगात् इति । मृग्यश्वमत्युच्चं, हस्तिनी-

शशमतिनीचं, षडङ्गुलगुह्याया द्वादशाङ्गुलगुह्येन संयोगे अत्युच्चं, द्वादशाङ्गुलगुह्यायाः षडङ्गुलगुह्येन संयोगे अतिनीचम् इति प्रमाणभेदेन गुह्यप्रमाणभेदेन रतं नवधा नवप्रकारमूचिरे ऊचुः ॥ ३ ॥ ४॥

उत्तमानि समान्याहुर्मध्यमुच्चरतं द्वयम् ॥
नीचद्वयं तथाऽत्युच्चमतिनीचं महाधमम् ॥ ५ ॥

उत्तमानीति । समानि रतानि उत्तमानि आहुः, समरतं त्रयमुत्तममाहुराचार्याः । उच्चरतद्वयं मध्यममाहुः । नीचद्वयं नीचरतद्वयम् अत्युच्चरतम् अतिनीचं च अधमान्याहुः ॥ ५ ॥

कण्डूतेरप्रतीकारादन्तर्लिङ्गाविमर्दनात् ॥
न द्रवन्ति न तृप्यन्ति योषितो नीचमोहने ॥ ६ ॥

कण्डूतेरिति । योषितः स्त्रियः नीचमोहने नीचरते कण्डूतेरप्रतीकारात् योनिगतकण्डूतिनिवृत्त्यभावाद्धेतोः अन्तर्लिङ्गाविमर्दनात् योनिरन्ध्रमध्ये लिङ्गस्य अविमर्दनात् न द्रवन्ति नच तृप्यन्ति तृप्तिं न गच्छन्ति तस्मान्नीचरतमधमम् ॥ ६ ॥

उच्चेपि मृदुगुह्यान्तःसंपीडासव्यथे हृदि ॥
न द्रवन्ति न तृप्यन्ति मनस्तन्त्रो हि मन्मथः ॥ ७ ॥

उच्चेति । उच्चरते मृदुनः कोमलस्य स्त्रिया गुह्यान्तःस्थलस्य संपीडया मुहुः स्मरमन्दिरान्तःपीडया अतिप्रमाणध्वजप्रवेशजनितातिव्यथयेत्यर्थः । हृदि हृदये सव्यथे सदुःखे सति योषितो न द्रवन्ति न तुष्यन्ति च । मन्मथः कामः मनस्तन्त्रः मनःप्रधानः। मनसि सन्तुष्टे सति तृप्तिर्विद्यते मनसि सव्यथे सति तु कुतस्तृप्तिरिति भावः ॥ ७ ॥

रक्तजाः क्रमयः सूक्ष्मा मृदुमध्योग्रशक्तयः ॥
स्मरसद्मनि कण्डूतिं जनयन्ति यथाबलम् ॥ ८ ॥

रक्तजा इति । रक्तजा रक्तजाता अतिसूक्ष्मा अव्यक्तरूपा मृदुममध्योग्रशक्तयःमन्दमध्यमशक्तयः क्रमयः जन्तवः स्मरसद्मसु वराङ्गेषु यथाबलं बलमनतिक्रम्य कण्डूतिं जनयन्ति ॥ ८ ॥

चण्डध्वजाभिघातेन कण्डूव्यपनयादतः ॥
क्षरणाच्च सुखं तासां विसृष्टेः स्यन्दनात्मनः॥ ६ ॥

चण्डध्वजेति । अतः चण्डध्वजाभिघातेन चण्डध्वजदण्डमर्दनेन कण्डूव्यपनयात् कण्डूतेरभावात् स्यन्दनात्मनो द्रवस्वरूपत्वात् क्षरणात्तासामङ्गनानां विसृष्टेर्विसर्गात् सुखं सततक्षरणाद्विसृष्टेरेव सुखं विद्यत इत्यर्थः । क्षरणादल्पसुखं जायते ततो विसृष्टेरधिकसुखं जायत इति भावः ॥ सततक्षरणेन तु सुखमल्पमिति प्रतिपादयितुमाह सततक्षरणे अधिकं सुखं नास्ति अन्ते विसृष्टौ सुखमधिकमङ्गनानां विद्यत इति भावः ॥ ६ ॥

कथं क्षरणेन सुखं नास्तीत्याशङ्क्याह

प्रारम्भात्प्रभृति स्यन्दः क्लेदात्मा सुखलेशदः ॥
अन्ते तु नरवत्तासां विसृष्टेर्मूर्च्छनासुखम् ॥१०॥

प्रारम्भादिति । प्रारम्भात्सुरतप्रारम्भात् प्रभृति प्रारम्भमारभ्य स्यन्दः क्षरणं क्लेदात्मा क्लिन्नतास्वरूपः क्लेदकारीत्यर्थः तस्माच्च सुखलेशदः सुरते अल्पसुखदः प्रारम्भकाले यादृशं सुखं मध्येपि तादृशमल्पमेव सुखमित्यर्थः। अन्ते तु नरवत् पुरुषस्येव पश्चाद्विसृष्टौ सत्यां मूर्छनासुखं पारवश्यमात्यन्तिकं सुखमस्तीति भावः । यथा नरस्य प्रारम्भात्प्रभृति स्रवणं नास्ति तथैवान्ते विसृष्टौ सत्यामङ्गनानां महत्सुखं विद्यते प्रारम्भात्प्रभृति स्यन्दश्चेदल्पसुखप्रद इत्यर्थः॥१०॥

तस्यैव स्वरूपमाह

क्षणं रटन्ती नृत्यन्ती रुदती चातिविह्वला ॥
निःसहत्वं तदा याति मुकुलीकृतलोचना ॥ ११ ॥

क्षणंरटन्तीति । क्षणं कंचित्कालं रटन्ती अव्यक्ताक्षरं जल्पन्ती, नृत्यन्ती, रुदती मिथ्यारोदनमभिनयन्ती, अतिविह्वला विक्लवा सती मुकुलीकृतलोचना मीलितलोचना अङ्गना तदानीं निःसहत्वं पारवश्यं प्राप्नोति ॥ ११ ॥

इदानीं तृप्तिस्वरूपमुच्यते

स्त्रीपुंसयोर्विसृष्टिश्च लघुमध्यचिरोदया ॥
नवधा रतमेवं स्यात् कालतोऽपि प्रमाणवत् ॥ १२ ॥

स्त्रीपुंसयोरिति । स्त्रीपुंसयोर्मिथुनस्य । "अचतुरे"त्यादिना-ऽकारान्तनिपातः । विसृष्टिः लघुमध्यचिरोदया । लघूदया अल्पकालोदया, मध्यकालोदया, चिरकालोदया एवं विसृष्टिस्त्रिप्रकारा । एवं कालतोऽपि । लघुमध्यचिरकालभेदेन प्रमाणवत् नवधा रतं स्यात् । कथमिति चेत्, लघुकालविसृष्टेः पुरुषस्य लघुकालविसृष्टाङ्गनया सङ्गमे समरतं, मध्यकालविसृष्टेः पुरुषस्य मध्यकालविसृष्टाङ्गनया समरतं, चिरकालविसृष्टेः पुरुषस्य चिरकालविसृष्टाङ्गनया समरतम्, एवं समरतानि त्रीणि । लघुकालविसृष्टाङ्गनया मध्यकालविसृष्टेः पुरुषस्य सङ्गमे एकमुच्चरतम्, मध्यकालविसृष्टाङ्गनया चिरकालविसृष्टेः पुरुषस्य सङ्गमे चैकमुच्चरतम्, एवमुच्चरतद्वयम् । मध्यकालविसृष्टाङ्गनया लघुकालविसृष्टेः पुरुषस्य सङ्गमे नीचरतम्, चिरकालविसृष्टाङ्गनया मध्यकालविसृष्टेः पुरुषस्य सङ्गमे च नीचरतम्, एवं नीचरतद्वयम् । लघुकालविसृष्टाङ्गनया चिरकालविसृष्टेः पुरुषस्य सङ्गमे अत्युच्चरतं, चिरकालविसृष्टाङ्गनया लघुकालविसृष्टेः पुरुषस्य सङ्गमे अतिनीचरतम् इति कालभेदादपि नवधा रतं भवति ॥१२॥

मन्दमध्यमचण्डाः स्युर्वेगतोऽप्युभये तथा ॥
वेगः कामुकता ज्ञेयस्तेनापि नवधा रतम् ॥ १३ ॥

मन्दमध्येति । वेगतोऽपि वेगेनापि उभये स्त्रियः पुरुषाश्च तथा मन्दमध्यमचण्डाः स्युः । मन्दवेगः, मध्यवेगः, चण्डवेग इति त्रिधा । वेगः कामुकता ज्ञेयः, कामुकत्वमिति वेगो ज्ञेयो ज्ञातव्यः । तेन वेगेनापि रतं नवधा भवति । कथमिति चेत्, मन्दवेगया स्त्रिया मन्दवेगस्य पुरुषस्य सङ्गमे एकं रतं, मध्यवेगया स्त्रिया मध्यवेगस्य पुरुषस्य सङ्गमे एकं रतं, चण्डवेगया स्त्रिया चण्डवेगस्य पुरुषस्य सङ्गमे एकं समरतं, एवं त्रिः । मन्दवेगाङ्गनया मध्यवेगस्य सङ्गमे एकमुच्चरतं, मध्यवेगाङ्गनया मन्दवेगस्य पुरुषस्य सङ्गमे एकमुच्चरतम्, एवन्द्विः । मध्यवेगाङ्गनया मन्दवेगस्य पुरुषस्य सङ्गमे नीचा-

ख्यमेकं रतं, चण्डवेगाङ्गनया मध्यवेगस्य पुरुषस्य सङ्गमे नीचाख्यमेकं रतम्, एवं नीचद्वयम्। मन्दवेगाङ्गनया चण्डवेगस्य पुरुषस्य सङ्गमे अत्युच्चाख्यमेकं रतं, चण्डवेगाङ्गनया मन्दवेगस्य पुरुषस्य सङ्गमे अतिनीचाख्यमेकं रतम् इति वेगभेदादपि नवधा रतं भवति॥१३॥

वीर्यं बहुक्षताघातसहत्वं रतिलोलता॥
चण्डवेगस्य चिह्नानि मन्दवेगे विपर्ययः॥ १४॥

वीर्यमिति। वीर्यं बलं बहुक्षताघातसहत्वम् अनल्पनखदन्तक्षतानामाघातस्य ताडनस्य सहिष्णुता, रतिलोलता रत्युत्सुकता एवं चण्डवेगस्य चिह्नानि लक्षणानि। मन्दवेगे विपर्ययः अस्य वैपरीत्यम्॥१४॥

एतेषां मध्यवेगे तु मध्यमत्वं समुन्नयेत्॥
प्रमाणकालभावैः स्युरित्येवं सप्तविंशतिः॥ १५॥

एतेषामिति। एतेषामुक्तलक्षणानां मध्यवेगे मध्यमत्वं समुन्नयेद्, मध्यमत्वं मध्यवेगत्वमिति जानीयादित्यर्थः। प्रमाणेन गुह्यप्रमाणेन, कालेन लघुमध्यचिरभावेन मन्दमध्यमचण्डभावेन चेति एवं सप्तविंशति रतानि स्युः॥१५॥

तत्रोत्तमत्वादीन्याह

रतानि तत्र साम्ये स्युः त्रिभिः सुरतमुत्तमम्॥
सर्ववैषम्यतस्तु स्यादधमं पशुचेष्टितम्॥ १६॥

रतानीति। तत्र रतेषु मध्ये त्रिभिः साम्ये सुरतमुत्तमे समरतमुत्तममित्यर्थः। प्रमाणकालवेगैः त्रिभिः साम्ये सति सुरतमुत्तममिति। सर्ववैषम्यतः सर्वेषां प्रमाणकालवेगानां वैषम्यतः वैषम्येण सुरतं पशुचेष्टितम् अधमं स्यात्॥१६॥

शेषे तु मध्यमत्वं स्यादेकत्रापि जुगुप्सितम्॥
अत्युच्चमतिनीचं च संक्षेपादिति भाषितम्॥ १७॥

शेषे त्विति। एकत्र जुगुप्सितमपि निन्दितमपि शेषे मध्यमभावे तत्सुरतं मध्यमं स्यात् उत्तमं न भवति अधमञ्च न भवति। मध्यममिति अत्युच्चमतिनीचं वा भवेत्। एवं सुरतस्य उत्तममध्यमाधमत्वं संक्षेपाद् मया भाषितम्॥१७॥

उक्तमृग्यादिभेदानामिदानीं चिह्नमुच्यते ॥
स्वभावगुणभेदेन वात्स्यायनमतोदितम् ॥ १८ ॥

उक्तमृग्येति । मृगीवडवाहस्तिनीनां शशवृषाश्वादीनां स्वभावगुणभेदेन इदानीं वात्स्यायनमुनिना गदितं चिह्नं शारीरं लक्षणमुच्यते ॥ १८ ॥

सममूर्द्धा कुञ्चितघनकेशी तुच्छोदरी नितम्बाढ्या ॥
अल्पविवरनासापुटविकचरुचिरपद्मलाक्षी च ॥ १९ ॥

सममूर्द्धेति । सममूर्द्धा वर्त्तुलमस्तका, कुञ्चितघनकेशी कुटिलसान्द्रकुन्तला, तुच्छोदरी अल्पोदरी, नितम्बाढ्या विपुलनितम्बा, "पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुर" इत्यमरसिंहः । अल्पविवरनासापुटा अल्पनासिकाच्छिद्रा नासिकाद्वारं विशालं न भवति, विकचरुचिरपद्मलाक्षी च विकचे विकसिते रुचिरे मनोहरे पद्मले सञ्जातघनपद्मणी अक्षिणी यस्याः स तथोक्ता । "बहुव्रीहौ सक्थ्यक्ष्णो" रिति समासान्तः । अल्पविवरेति विशेषणद्वयेन कर्मधारयः ॥ १९ ॥

अरुणाधरकरचरणा कोमलतरसरलभुजलतिका च ॥
आयतकर्णकपोलग्रीवाऽनतिमांसलोरुजघना च ॥ २० ॥

अरुणेति । अरुणाधरकरचरणा निसर्गशोणोष्ठपाणिचरणतला, कोमलतरसरलभुजलतिका कोमलतरे सरले भुजलतिके यस्याः सा तथोक्ता, आयतकर्णकपोलग्रीवा आयताः कर्णौ कपोलौ ग्रीवा यस्याः सा तथोक्ता, कर्णौ कपोलौ च ग्रीवा च एतानि आयतानि भवन्तीत्यर्थः । अनतिमांसलोरुजघना च अतिमांसलसक्थिजघना न भवति ॥ २० ॥

समगुल्फा मदगजगतिरीर्ष्याकुलितोन्नतस्तनी तन्वी ॥
तरलमनाः सुकुमारा लघुकोपा सुरतलम्पटा लघुभुक्॥२१॥

समगुल्फेति । समगुल्फा उन्नतगुल्फा न भवति, मदगजगतिः मत्तमातङ्गगमना, ईर्ष्याकुलिता ईर्ष्यया असूयया आकुला सङ्कुला, उन्नतस्तनी उन्नतकुचा, तन्वी कृशाङ्गी, तरलमनाश्चञ्चलचित्ता, सुकुमारा मृद्वङ्गी, लघुकोपा अल्परोषा, सुरतलम्पटा सुरतोत्सुका, लघुभुक् मिताहारा च भवति ॥२१॥

कुसुमसुरभिरतिसलिला सरलाङ्गुलिरलसमधुरोक्तिः ॥
निम्नषडङ्गुलगुह्या ऋजुतनुरनुरागिणी हरिणी ॥२२॥

कुसुमेति । कुसुमसुरभिरतिसलिला सुमनोगन्धिस्मरजला, सरलाङ्गुलिः सरला अकुटिला अङ्गुलयो यस्याः सा तथोक्ता, अलसमधुरोक्तिः अलसा अस्फुटा मधुरा मनोहरा उक्तिर्वचनं यस्याः सा तथोक्ता, निम्नषडङ्गुलगुह्या निम्नं गम्भीरं षडङ्गुलप्रमाणं गुह्यं यस्याः सा तथोक्ता, ऋजुतनुः ऋजुदेहा, अनुरागिणी स्नेहवती एवंलक्षणलक्षिता वनिता हरिणीजातिः ॥ २२ ॥

निम्नसमुन्नतमूर्द्धा स्थूलसरलसान्द्रशिरसिजप्रचया ॥
उत्पलदलचलनयना स्थूलायतकर्णयुगलवदना ॥२३॥

निम्नसमुन्नेति । निम्नसमुन्नतमूर्द्धा विषमोन्नतमस्तका,स्थूलसरलसान्द्रशिरसिजप्रचया स्थूलाः असूक्ष्माः सरलाः अकुटिलाः सान्द्रा घनाः शिरसिजप्रचयाःकेशसञ्चया यस्याः सा तथोक्ता,उत्पलदलचलनयना कुवलयदलचञ्चलाक्षी,स्थूलायतकर्णयुगलवदना स्थूलानि आयतानि कर्णयुगलवदनानि यस्याः सा तथोक्ता इत्युभयत्र कर्मधारयः ॥ २३ ॥

स्थूलरदनराजिरायतदन्तच्छदपीनकठिनकुचकलशा ॥
सुललितमांसलबाहुः तुच्छोदरी कमलमृदुपाणिः ॥२४॥

स्थूलेति । स्थूला रदनराजिः दन्तपङ्क्तिर्यस्याः सा, आयतदन्तच्छदपीनकठिनकुचकलशा आयतः दीर्घः दन्तच्छदः अधरो यस्याः सा,पीनौ पीवरौ कठिनौ कठोरौ कुचकलशौ स्तनकुम्भौ यस्याःसा तथोक्ता, सा चासौ इत्युभयत्र कर्मधारयः । सुललितमांसलबाहुः सुललितौ मांसलौ बाहू यस्याः सा तथोक्ता, तुच्छोदरी कमलमृदुपाणिश्च॥२४॥

विस्तृतहृदयकपाटा गद्गदमधुरोक्तिरीर्ष्ययोद्विग्ना ।
निम्नसुवर्त्तुलनाभिर्वक्ररुचिरजघनसमलघूरुश्च ॥२५॥

विस्तृतेति । विस्तृतहृदयकपाटा विशालवक्षःस्थला, गद्गदमधुरोक्तिः स्खलन्मञ्जुलभाषिणी,ईर्ष्यया असूयया उद्विग्ना आकुला,

निम्नसुवर्त्तुलनाभिः गम्भीरवृत्तनाभिस्थला, वक्ररुचिरजघना वक्रे रुचिरे जघन यस्याः सा, समलघूरुश्च समौ अलघू ऊरू यस्याः सा ॥ २५ ॥

विपुलकटिर्नतमध्या खेलालसगमनरक्तसमचरणा ।
चपलहृदयकोमलतनुर्निद्राहारप्रिया प्रियप्रवणा ॥२६॥

विपुलेति । विपुलकटिः विशालकटि,र्नतमध्या नम्रमध्या, खेलालसगमनरक्तसमचरणा विलासालसगतिः रक्तसमाङ्घ्रिः,चपलहृदयकोमलतनुः चपलचित्ता कोमलतनुश्च, निद्राऽऽहारप्रिया अतिनिद्राऽशनाभिलाषिणी, प्रियप्रवणा प्रियसक्तचित्ता च ॥ २६ ॥

प्रथमचरमधात्वधिका पीतपललगन्धिसुरताम्बुः ।
त्वरणमदनरणगुणिनी वहति च वडवा नवाङ्गुलं गुह्यम् ॥२७॥

प्रथमचरमेति । प्रथमचरमधात्वधिका प्रथमधातुर्वायुः चरमधातुः श्लेष्मा ताभ्यामधिका वातश्लेष्मप्रकृतिरित्यर्थः । पीतपललगन्धिसुरताम्बुः पीतं हारिद्रं पललगन्धि मांसगन्धि सुरताम्बु स्मरजलं यस्याः सा तथोक्ता,त्वरणमदनरणगुणिनी त्वरणगुणः स्यन्दगुणः, मदनरणगुणः चण्डवेगत्वं तौ यस्या विद्येते इति त्वरणमदनरणगुणिनी एवंविधा वडवा नवाङ्गुलं नवाङ्गुलप्रमाणं गुह्यं वहति ॥ २७ ॥

पृथुभिरलिकगण्डश्रोत्रनासापुटैर्या
करचरणभुजोरुद्वन्द्वकैर्ह्रस्वपीनैः ।
दरविनमितखर्वस्थूलया ग्रीवया च
प्रकटरदशिखाभिः कुन्तलैः स्थूलनीलैः ॥२८॥

पृथुभिरिति । पृथुभिः स्थूलैरलिकगण्डश्रोत्रनासापुटैर्ललाटकपोलकर्णनासिकारन्ध्रैः, प्रकटरदनाशिखाभिर्विशालदन्ताग्रैः, स्थूलनीलैः कुन्तलैः, ह्रस्वपीनैर्वामनपीवरैः करचरणभुजोरुद्वन्द्वकैः, दरविनमित खर्वस्थूलया ग्रीवया ईषद्विनमितस्थूलकण्ठेनचोपलक्षित॥२८॥

अनवरतरतार्तिः कुम्भिगम्भीरकण्ठ-
स्वरशबलशरीरा स्फारलम्बाधरोष्ठी ।
विपुलमदनतोया कोपना पिङ्गलाक्षी
करिमदमदनाम्बुः प्रायशो गूढपापा ॥२९॥

अनवरतेति । अनवरतरतार्ता निरन्तरसुरतेन आर्ता पीडिता, कुम्भिगम्भीरकण्ठस्वरशबलशरीरा, कुम्भिवत् गजवत् गम्भीरः कण्ठ-स्वरः, शबलं शरीरं च यस्याः सा, स्फारलम्बाधरोष्ठी विपुललम्बाधरोष्ठी, विपुलमदनतोया अधिकमदनजला, कोपना कोपशीला, पिङ्गलाक्षी पिङ्गलनयना, करिमदमदनाम्बुः गजमदगन्धिस्मरजला, प्रायशः गूढपापा छन्नपापा ॥ २९ ॥

अतिबहुतरदोषा हस्तिनी दण्डसाध्या
वहति च रविसङ्ख्यैरङ्गुलैर्गुह्यदेशम् ॥३०॥

अतिबहुतरेति । अतिबहुतरदोषा बहुदोषकारिणी, एवंविधा इभिकाजातिः दण्डसाध्या दण्डेन साध्या, रविसङ्ख्यैरङ्गुलैर्द्वादशाङ्गुलैर्गुह्यदेशं वहति द्वादशाङ्गुलगुह्या भवति ॥ ३० ॥

अथ नायकानां शशादिभेदनिरूपणम् ।

आताम्रस्फारनेत्रा लघुसमदशना वर्त्तुलास्याः सुवेषाः
मृद्वारक्तं वहन्तः करमतिललितं श्लिष्टशाखं सुवाचः ।
वृत्तव्यालोललीलाः सुमृदुशिरसिजा नातिदीर्घां वहन्तो
ग्रीवां जानूरुहस्ते जघनचरणयोर्बिभ्रतः कार्श्यमुच्चैः ॥३१॥

आताम्रेति । आताम्रस्फारनेत्रा आरक्तविशालनयना, लघुसमदशनाः, वर्तुलास्याः वृत्तवदनाः, सुवेषाः शोभनाकाराः, अतिललितम् अतिसुन्दरं श्लिष्टशाखं सुश्लिष्टाङ्गुलं मृदु कोमलमारक्तं किंचिल्लोहितं करं वहन्तः, सुवाचः शोभनवचनाः, वृत्तव्यालोललीलाः वृत्तं सुरतं तत्र व्यालोला सतृष्णा लीला येषां ते, सुमृदुशिरसिजा मृदुकेशाः, नातिदीर्घां खर्वां ग्रीवां वहन्तः, जानूरुहस्ते जघनचरणयोश्च उच्चैः कार्श्यं कृशत्वं बिभ्रतः ॥ ३१ ॥

अल्पाहाराल्पदर्पा लघुसुरतरताः शौचभाजो धनाढ्याः ।
मानोदीर्णाः शशाः स्युः सुरभिरतजलाःकान्तिमन्तःसहर्षाः॥३२॥

अल्पेति । अल्पाहाराल्पदर्पा अल्पाशनाः, अल्पदर्पाश्च, लघुसुरतरताः अल्पसुरतरताः शौचभाजः शुचयो, धनाढ्या धनवन्तः, मानोदीर्णा मानाधिकाः, सुरभिरतजलाः सुगन्धिस्मराम्बवः, कान्तिमन्तः सहर्षाः, एवंलक्षणलक्षिताः शशाः शशजातयः स्युर्भवन्ति॥३२॥

स्फाराभ्युन्नतमस्तकाः पृथुतरे वक्त्रालिके बिभ्रतः
स्थूलग्रीवसुमांसलश्रुतिभृतः कूर्मोदराः पीवराः ।
दीर्घप्रोन्नतकक्षलम्बितभुजा आरक्तहस्तोदरा
रक्तान्तःस्थिरपक्ष्मलाम्बुजदलच्छायेक्षणाःसात्विकाः ॥३३॥

स्फारेति । ये स्फाराभ्युन्नतमस्तकाः विशालोन्नतशिरसः, पृथुतरे वक्त्रालिके बिभ्रतःपृथुतरवक्त्राःपृथुतरललाटाश्च,स्थूलग्रीवाः सुमांसलश्रवणाश्च, कूर्मोदराः कूर्माकारोदराः, पीवराः, दीर्घप्रोन्नतकक्षलम्बितभुजाः दीर्घा अत्युन्नता कक्षपर्यन्तं लम्बिता भुजा बाहवो येषान्ते आरक्तहस्तोदराः लोहितशया, रक्तान्तःस्थिरपक्ष्मलाम्बुजदलच्छायेक्षणाः रक्तानिआन्तिःस्थिराणि पक्ष्मलानि अम्बुजदलच्छायानि पद्मपत्रसदृशानि ईक्षणानि नयनानि येषां ते तथोक्ताः, सात्विकाः सत्वगुणभूयिष्ठा भवन्ति ॥ ३३ ॥

खेलत्सिंहपदक्रमा मृदुगिरः पीडासहास्त्यागिनो
निद्रासक्तिभृतस्त्रपाविरहिता दीप्ताग्नयः श्लेष्मलाः ।
मध्यान्ते सुखिनोऽतिमज्जवपुषः सत्त्वारमेदोधिकाः
सर्वस्त्रीसुभगा नवाङ्गुलमितं लिङ्गं वृषा बिभ्रति ॥३४॥

खेलत्सिंहेति । खेलत्सिंहपदक्रमाः सविलासस्वैरगमना, मृदुगिरो मृदुभाषिणः पीडासहाः क्लेशसहाश्च, त्यागिनः त्यागवन्तः, निद्रासक्तिभृतः निद्रासङ्गं वहन्तः, अतिनिद्रालसा इत्यर्थः । त्रपाविरहिता निर्लज्जाः दीप्ताग्नयः दीप्तजठराग्नयः, श्लेष्मलाः श्लेष्मप्रकृतयः, मध्यान्ते मध्ये अन्ते च वयसि सुखिनः विद्यमानसुखाः,अतिमज्जवपुषः

अतिमज्जाढ्यशरीराः, सत्वारमदोधिकाः सत्वारेण मेदसा अधिकाः, सर्वस्त्रीसुभगाः सर्वस्त्रीवल्लभाः, नवाङ्गुलमितं नवाङ्गुलप्रमाणं लिङ्गं ध्वजं वहन्तस्ते वृषा भवन्ति ॥ ३४ ॥

वक्त्रश्रोत्रशिरोधराधररदैरत्यन्तदीर्घैः कृशै-
र्ये स्युः पीवरकक्षमांसलभुजाः स्थूलर्ज्जुसान्द्रैः कचैः ।
प्रौढेर्ष्याः कुटिलाङ्गजानुसुनखा दीर्घाङ्गुलिश्रेण्यो
दीर्घस्फारविलोललोचनभृतः प्रौढाश्च निद्रालसाः ॥३५॥

वक्त्रश्रोत्रेति । कृशैरत्यन्तदीर्घैश्च वक्त्रश्रोत्रशिरोधराधररदैः कुटिलैः श्रोत्रैः, श्रुतिभिः शिरोधराभिर्ग्रीवाभिः, अधरैः ओष्ठैः, रदैर्दन्तैश्च ये उपलक्षिताः स्युः, ये पीवरकक्षमांसलभुजा, ये स्थूलर्ज्जुसान्द्रैः स्थूलैरकुटिलैर्घनैः कचैश्चोपलक्षिताः, ये प्रौढेर्ष्याः ईर्ष्याकुलाः, ये कुटिलाङ्गजङ्घनखराः वक्राङ्गजङ्घाः, सुनखाश्च, ये दीर्घाङ्गुलिश्रेण्यः दीर्घाङ्गुलिपङ्क्तयः, ये दीर्घस्फारविलोललोचनभृतः अतिविशालचञ्चललोचनवन्तः, ये प्रौढा निद्रालसा निद्रालवश्च ॥ ३५ ॥

गम्भीराम्मधुरां गिरं द्रुतगतिं पीनोरुकौ बिभ्रतो
दीप्ताग्निप्रमदारताः शुचिगिरो रेतोस्थिधातूज्ज्वलाः ।
तृष्णार्त्ता नवनीतशीतबहलक्षारस्मराम्बुद्रवा
लिङ्गैर्द्वादशकाङ्गुलैर्निगदिता अश्वाः समोरःस्थलाः ॥३६॥

गम्भीरामिति । ये गम्भीरां मधुरां गिरं वाचं बिभ्रतः, ये द्रुतगतिं बिभ्रतः, ये पीनोरुकौ पीवरोरू च बिभ्रतः, ये दीप्ताग्निप्रमदारताः दीप्ताग्नयः प्रमदारताश्च, ये शुचिगिरः सत्यवादिनः, ये रेतोस्थिधातूज्ज्वलाः रेतोधातुना अस्थिधातुना च उज्ज्वलाः, ये तृष्णार्त्ताः सतृष्णा, ये नवनीतशीतबहलक्षारस्मराम्बुद्रवाः नवनीतवत् शीतः बहलः सान्द्रः क्षारगन्धी च स्मराम्बुद्रवो येषां ते तथोक्ताः, ये समोरःस्थलाः समवक्षसः, द्वादशाङ्गुलैर्लिङ्गैरुपलक्षिता एवंलक्षणलक्षिताः अश्वा निगदिताः अश्वजातयः पुरुषाः कथिताः ॥ ३६ ॥

उक्तोपस्थप्रमाणस्य व्यभिचारेपि लक्षयेत्।
शशमृग्यादिजातित्वमुत्तमाधमभेदतः ॥३७॥

उक्तोपस्थेति। उक्तोपस्थप्रमाणस्य पूर्वोक्तगुह्यप्रमाणस्य व्यभिचारेपि अङ्गुलेरेकस्य वृद्धिर्वा हानिर्वा व्यभिचारः तस्मिन् व्यभिचारे वैषम्ये सत्यपि शशमृग्यादिजातित्वमुत्तमाधमभेदतो लक्षयेत्। उक्तगुह्यप्रमाणादधिके सत्युत्तमं हीने सत्यधममिति जानीयात्॥ ३७॥

उक्तोच्यमानवक्तव्यलक्षणानि च यान्यतः।
तत्सङ्करेपि बाहुल्याल्लक्षं निर्द्धारयेद्बुधः ॥३८॥

इति श्रीसिद्धपाटलीयकोक्कोककृते रतिरहस्ये
सुरतभेदे जात्यधिकारो नाम
तृतीयः परिच्छेदः॥



उक्तोच्यमानेति। उक्तानि कथितानि, उच्यमानानि कथ्यमानानि, वक्तव्यानि वाच्यानि यानि लक्षणानि विद्यन्ते कानि चिदुक्तानि, कानि चिदुच्यमानानि, कानि चिद्वक्तव्यानि एवं त्रिप्रकाराणि लक्षणानि तत्सङ्करे तेषां लक्षणानां सङ्करे मिश्रीभावे सति बाहुल्यादाधिक्यात् बुधः पण्डितः लक्षं लक्षणं लक्षयेत् निर्धारयेत्। सङ्करे यत्राधिकमस्ति तदेव स्वीकर्त्तव्यमित्यर्थः॥ ३८॥

इति श्रीकाञ्चीनाथकृतायां रतिरहस्यदीपिकायां
सुरतभेदे जात्यधिकारो नाम
तृतीयः परिच्छेदः॥



बाला स्यात् षोडशाब्दात्तदुपरि तरुणी त्रिंशतिर्यावदूर्द्ध्वं
प्रौढा स्यात्पञ्चपञ्चाशदवधिपरतो वृद्धतामेति नारी।
दीर्घा कृष्णा च तन्वी चिरविरहवती निम्नकक्षा श्लथाः स्युः
स्थूला गौरी च खर्वा सततरतिपरा व्यूढकक्षा घनाः स्युः ॥१॥

बालास्यादिति। षोडशाब्दादर्वाक्पूर्वं बालेत्युच्यते। तदुपरि षोडशाब्दादुपरि त्रिंशतिर्यावत्तावत्तरुणीत्युच्यते षोडशमारभ्य त्रिंशद्वर्षपर्यन्ते तरुणीत्युच्यते। ऊर्ध्वं त्रिंशतेरूर्ध्वं पञ्चपञ्चाशदवधि पञ्चाधिकपञ्चाशत्पर्यन्तं प्रौढा स्यात्प्रौढेत्युच्यते। नारी परतः परेण वृद्धतामेति वृद्धेत्युच्यते। इति वयोलक्षणमुक्तम्। अथ स्वभावलक्षणमुच्यते।

"निदाघशरदोर्बाला पथ्या विषयिणां भवेत्।
हेमन्ते तरुणी योग्या, प्रौढा वर्षावसन्तयोः॥
सततं सेव्यमानापि बाला वर्द्धयते बलम्॥
अक्षमा रत्ययोग्या स्त्री वृद्धा तु कुरुते ज्वरम् इति"॥

दीर्घादीर्घदेहा, कृष्णा कृष्णवर्णा, तन्वी कृशाङ्गी, चिरविरहवती चिरमविद्यमानसुरता, निम्नकक्षा निम्नबाहुमूला एताः श्लथाः स्युः श्लथाख्या भवन्ति। स्थूला स्थूलाङ्गी, गौरी गौराङ्गी, खर्वा वामना, सततरतिपरा विद्यमानसुरता, व्यूढकक्षा निम्नतरकक्षा एता घनाः घनाख्या भवन्ति। अविद्यमानसुरताया: श्लथत्वं महाभारतेऽप्युक्तम्। "अमैथुनं जरा स्त्रीणामनध्वा वाजिनां जरे" ति ॥ १ ॥

सङ्कीर्णचिह्नेन च मध्यमा स्यादयं च तासां विदितः स्वभावः।
बाला घना बाह्यरतोपचर्या प्रौढा श्लथाभ्यन्तरमोहनेच्छुः ॥२॥

सङ्कीर्णचिह्नेनेति। सङ्कीर्णचिह्नेन पूर्वोक्तलक्षणद्वयसङ्करान्मध्यमा स्यात्। अयं तासामङ्गनानां स्वभावो विदितः। बालाङ्गना घनाङ्गनाश्च बाह्यरतोपचर्या भवन्ति बाह्यरतमालिङ्गनादि, बालायां घनायां च विशेषेण बाह्यरतं योज्यमिति भावः। प्रौढाङ्गना श्लथाङ्गना चाभ्यन्तरमोहनेच्छुः स्यात् आभ्यन्तरसम्भोगेच्छुर्भवति। प्रौढायां श्लथायां चाभ्यन्तरं रतं विशेषेण प्रयोज्यमित्यर्थः। यः तरुणी सा घनैवेति नोद्दिष्टा ॥ २ ॥

उक्ता गुणपताकायामवस्थासु क्रिया च या।
तामपि न्यायसंवित्तिसिद्धत्वादाद्रियामहे ॥३॥

उक्तागुणेति। गुणपताकायां गुणपताकाख्यशास्त्रे अवस्थासु बालातरुणीप्रौढावृद्धावस्थासु क्रिया कर्म्म व्यापार उक्ता तां क्रियामपि न्यायसंवित्तिसिद्धत्वाद् युक्तियुक्तत्वेन निश्चितत्वात् आद्रियामहे तस्यां क्रियायामादरं कुर्म्म इति भावः। आदृत्य तां क्रियां ब्रूम इत्यर्थः ॥ ३ ॥

बाला ताम्बूलमालाफलरससुरसाहारसम्मानहार्या,
मुग्धा ऽलङ्कारहारप्रमुखवितरणैः रज्यते, यौवनस्था।
सद्भावारब्धगाढोद्भटरतसुखिता, मध्यमा रागलुब्धा,
वृद्धाऽऽलापैः प्रहृष्टा भवति गतवया गौरवेणातिदूरम् ॥४॥

बालेति। बाला बालाङ्गना ताम्बूलमालाफलरससरसाहारसंमानहार्या ताम्बूलादिभिर्हार्या वशीकार्या भवति, मुग्धा अप्रगल्भा अलङ्कारहारप्रमुखवितरणैरलङ्कारादिदानैः रज्यते। यौवनस्था तरुणी सद्भावारब्धगाढोद्भटरतसुखिता सद्भावैः आरब्धगाढोद्रिक्तसम्भोगोत्सुका भवति। मध्यमा प्रौढाङ्गना रागोत्सुका च भवति, गतवया वृद्धा मृद्वालापैः सुकुमारवचनैः प्रहृष्टा गौरवेणापि युक्ता भवति। वृद्धाङ्गनाया वचनैरेव तृप्तिरित्यर्थः ॥ ४ ॥

गूढास्थिग्रन्थिगुल्फा मृदुमधुरवचाः श्लेष्मला पद्ममृद्वी
व्यक्तास्थिग्रन्थिगुल्फा युवतिरशिशिरैरङ्गकैः पित्तला स्यात्।
रूक्षाशीतोष्णगात्री वदति बहुतरं वातला श्लेष्मलापि
स्यादुष्णा नव्यसूता शिशिरतरतनुर्गर्भिणी पित्तलापि॥५॥

गूढास्थिग्रन्थीति। गूढास्थिग्रन्थिगुल्फा गूढा अस्थ्नां ग्रन्थयो गुल्फौ च यस्याः सा, मृदुमधुरवचाः मृदु सुश्रवं मधुरं वचो रवो यस्याः सा तथोक्ता, पद्ममृद्वी सरसिजसुकुमाराङ्गी, एवंविधा श्लेष्मला श्लेष्मप्रकृतिः। व्यक्ता अस्थिग्रन्थयो गुल्फौ च यस्याः सा तथोक्ता, अशिशिरैरुष्णैरङ्गकैरुपलक्षिता, उष्णाङ्गी पित्तला पित्तप्रकृति-

भवति, कृष्णा कृष्णवर्णा शीतोष्णगात्री शीतमुष्णं च गात्रं यस्याः सा तथोक्ता, बहुतरं वदति बहुभाषिणीत्यर्थः । एवंविधा वातला वातप्रकृतिः । श्लेष्मला श्लेष्मप्रकृतिः, नव्यसूता नूतनप्रसवा चोष्णाङ्गी स्यात् । पित्तला पित्तप्रकृतिरपि गर्भिणी चेच्छिशिरतनुर्भवति ॥ ५ ॥

अचिरलघुचिरोच्चैःकालभावावसानाः
प्रमददहनगाढद्वारगुह्या क्रमेण ।
सततशिशिरकालोपेतहेमन्तवर्षा-
मधुषु निधुवनेच्छा सम्प्रयोगे प्रदिष्टा ॥६॥

अचिरेति । एताः श्लेष्मादिप्रकृतयः अङ्गनाः क्रमेण अचिरलघुचिरोच्चैःकालभावावसानाः अचिरात् कालात् शीघ्रकालाल्लघुचिरान्मध्यमकालात् उच्चैःकालाच्चिरकालाच्च भावावसानं कालमोक्षो यासान्तास्तथोक्ताः । क्रमेण प्रमददहनगाढद्वारगुह्याः प्रमदं बहुद्रवं दहनमुष्णं गाढं सङ्कटं द्वारं येषां तानि प्रमददहनगाढद्वाराणि गुह्यानि यासां तास्तथोक्ताः, एवमुक्तं भवति, श्लेष्मप्रकृतिः शीघ्रभावावसाना बहुद्रवगुह्यद्वारा च, पित्तप्रकृतिर्मध्यकालभावावसाना उष्णद्वारगुह्या च, वातप्रकृतिश्चिरकालभावावसाना गाढद्वारगुह्या च भवतीत्यर्थः । सततशिशिरकालोपेतहेमन्तवर्षामधुषु निधुवनेच्छाः सततशिशिरकालसहितेषु हेमन्तवर्षामधुषु निधुवनेच्छा सुरतेच्छावती, श्लेष्मप्रकृतिः शिशिरवसन्तयोः सुरतप्रिया भवति, पित्तप्रकृतिर्वर्षाशरदोः सुरतप्रिया हृष्टा भवति, सम्प्रयोगे सुरते वर्षाशब्देनात्र शरदपि विवक्षिता । वातप्रकृतिर्वसन्तग्रीष्मयोः संप्रदिष्टा भवति ॥ ६ ॥

यत्प्रकृतीनां लक्षणमभिहितमधिकञ्च गुणपताकायाम् ।
तच्चाप्यनुभवसिद्धं स्फुटतरमभिधीयते किमपि ॥७॥

यत्प्रकृतीनामिति । गुणपताकायां गुणपताकाख्यशास्त्रे प्रकृतीनां श्लेष्मादीनामधिकं यल्लक्षणमभिहितं प्रोक्तम् अनुभवसिद्धं चापि लक्षणं किमपि स्फुटतरं व्यक्तमुच्यते । गुणपताकोक्तप्रकृतिलक्षणमपि वक्ष्यामीत्यर्थः ॥ ७ ॥

स्निग्धनखनयनदशना निरनुशया मानिनी स्थिरस्नेहा ।
सुस्पर्शाशिशिरमांसलवराङ्गविवराङ्गना श्यामा ॥८॥

स्निग्धनखेति। स्निग्धनखनयनदशना यस्या नखादयः स्निग्धाः सन्तीत्यर्थः। निरनुशया पश्चात्तापरहिता, मानवती, स्थिरस्नेहा अचपलसौहार्दा, सुस्पर्शशिशिरमांसलवराङ्गविवरा सुस्पर्शः शिशिरो मांसलो वराङ्गविवरो योनिविवरो यस्याः सा तथोक्ता, श्यामा श्यामाङ्गी अङ्गना श्लेष्मप्रकृतिर्भवति सा एतासां प्रकृतीनामुत्तमा॥८॥

भवति विलासप्रकृतिः पित्तप्रकृतिस्तु मध्यमा ज्ञेया।
सा भवति गौरवर्णा पीनकुचा रक्तनखनयना॥९॥

भवतीति। विलसनशीला भवति। पित्तप्रकृतिर्मध्यमा ज्ञेया। सा पित्तप्रकृति गौरवर्णा पीवरकुचा पीनस्तना रक्तकरतला रक्तलोचना च भवतीत्यर्थः॥ ९॥

कटुगन्धिप्रस्वेदा क्षणं च कुपिता क्षणं प्रसन्ना च।
शिशिररताऽऽतपविमुखी सोष्मा प्रशिथिलवराङ्गी च॥१०॥

कटुगन्धीति। कटुगन्धिगात्रस्वेदा यस्याः सा, क्षणं कुपिता, क्षणं प्रसन्ना च, शिशिररता शीतलोत्सुका, आतपविमुखी, उष्मसहिता शिथिलवराङ्गी स्यात् पाठान्तरे तु उष्णोष्णम् अस्त्युष्णम् शिथिलं वराङ्गं स्मरमन्दिरं यस्याः सा तथोक्ता॥ १०॥

मेधाविनी सुकुशला वहति रते निश्चितं मृदुताम्।
पवनप्रकृतिः परुषा भ्रमणरता स्याद्बहुप्रलापा च॥११॥

मेधाविनीति। मेधाविनी बुद्धियुक्ता, कुशला, रते सुरते निश्चितं नियतं मृदुतां मार्दवं वहति। मध्यसुरतरता भवतीति यावत्। इयं पित्तप्रकृतिः॥ पवनप्रकृतिर्वातप्रकृतिः परुषा परुषवचना भ्रमणरता परिभ्रमणशीला बहुप्रलापा च बहुभाषिणी॥ ११॥

दरदग्धद्रुमधूसरवर्णा बहुभोजना च कठिनाङ्गी।
स्फुटिताग्ररूक्षकेशी कठिनतरा श्यामनखनयना॥१२॥

दरदग्धेति। दरदग्धद्रुमधूसरवर्णा ईषद्दग्धवृक्षवद्धूसरवर्णा, बहुभोजना, कठिनाङ्गी कठिनदेहा च, स्फुटिताग्ररूक्षकेशी स्फुटिताग्राः रूक्षाः परुषाः केशा यस्याः सा तथोक्ता, कठिनरता कठोरसुरता, श्यामनखनयना श्यामनखी श्यामनयना च भवति॥ १२॥

गोजिह्वाभस्पर्शकठोरवराङ्गाऽधमा नारी ।
सङ्कीर्णलक्षणेन च सङ्कीर्णप्रकृतिरेव विज्ञेया ॥१३॥

गोजिह्वेति । गोजिह्वाभस्पर्शकठोरवराङ्गा गोजिह्वासदृशस्पर्शकठिनगुह्या नारी वातप्रकृतिरियमधमा । सङ्कीर्णलक्षणेन मिश्रलक्षणेन सङ्कीर्णप्रकृतिः मिश्रप्रकृतिरेव विज्ञेया ज्ञातव्या ॥ १३ ॥

सुरभिशुचिशरीरा सुप्रसन्नानना च
प्रचुरधनजनाढ्या भामिनी देवसत्त्वा ।
व्यपगतगुरुलज्जोद्यानपानार्णवाद्रौ
स्पृहयति रतिसिद्ध्यै रोषणा यक्षसत्त्वा ॥१४॥

सुरभीति । सुरभिशुचिशरीरा सुगन्धिशुद्धदेहा, सुप्रसन्नवदना,प्रचुर धनजनाढ्या प्रचुरधनजनैराढ्या, भामिनी देवसत्त्वा भवति । व्यपगतगुरुलज्जा व्यपगता गुरुभ्यो लज्जा यस्याः सा तथोक्ता, उद्यानपानार्णवाद्रौ रतिसिद्ध्यै स्पृहयति । उद्यानेषु, पानेषु पानस्थानेषु, अर्णवे समुद्रे, अद्रौ पर्वते च सम्भोगेच्छुः, रोषणा रोषवती यक्षसत्त्वा स्यात् ॥ १४ ॥

भवति सरलचित्ता दक्षिणातिथ्यरक्ता
स्फुटमिह नरसत्त्वा खिद्यते नोपवासैः ।
श्वसिति बहुतरं या जृम्भते भ्रान्तिशीला
स्वपिति सततमेव व्याकुला नागसत्त्वा ॥१५॥

भवतीति । या सरलचित्ता ऋजुमानसा, आतिथ्यरक्ता अतिथिपूजाकारिणी, दक्षिणा दक्षत्वं वहन्ती, या उपवासैर्न खिद्यते उपवासक्षमा भवति सारवत्त्वात् सा नरसत्त्वा । या बहुतरं श्वसिति बहुनिःश्वासा भवति, या जृम्भते जृम्भां करोति, या भ्रान्तिशीला भ्रमणशीला, या स्वपिति निद्रालुर्भवति सततं संततं व्याकुला सा नागसत्त्वा ॥ १५ ॥

अपेतरोषोज्ज्वलदीप्तवेषां स्रग्गन्धधूपादिषु बद्धरागाम् ।
सङ्गीतलीलाकुशलां कलाज्ञां गन्धर्वसत्त्वां युवतीं वदन्ति ॥१६॥

अपेतरोषेति। अपेतरोषोज्ज्वलदीप्तवेषाम् अपेतः अपगतः रोषः कोप, उज्ज्वलो दीप्तो दिव्यो वेषो यस्याः सा तथोक्ता, स्रजि मालायां, धूपे च, आदिशब्दादन्येषां परिग्रहः। अपगतरोषा च सेतिकर्मधारयो वा समाधयः, पुष्पादिषु बद्धरागामित्यर्थः। सङ्गीतलीलाकुशलां संगीतवाद्यलीलासु कुशलां, कलाज्ञां कलाः कामकलास्ता जानाति कामकलाकुशलेत्यर्थः। एवंविधां युवतीं गन्धर्वसत्त्वां वदन्ति॥ १६॥

मानोज्झिताऽतिबहुभुक् प्रकटोष्णगात्री
भुङ्क्ते च मद्यपललादि पिशाचसत्त्वा।
दृष्टिं मुहुर्भ्रमयति प्रबलाशनार्त्ति-
रुद्वेगमेति विपुलं किल काकसत्त्वा॥१७॥

मानोज्झितेति। मानोज्झिता मानहीनेत्यर्थः। अतिबहुभुक् बहुभोजना, प्रकटोष्णगात्री प्रकटोष्णदेहा, मद्यपललादि सुरामांसबहलाहारं भुङ्क्ते, एवंलक्षणा पिशाचसत्त्वा भवति। दृष्टिं मुहुर्निरन्तरं भ्रमयति, प्रबलाशनार्त्तिः अधिकबुभुक्षा, विपुलम् अधिकम् उद्वेगं त्रासमेति गच्छति भयभीता भवतीत्यर्थः। सा काकसत्त्वा॥१७॥

उद्भ्रान्तदृक्करजदन्तरणप्रसक्ता
स्याद्वानरप्रकृतिरस्थिरचित्तवृत्तिः।
या दृष्टविप्रियवचोरचना च नारी
रक्ता विटप्रहरणे खरसात्त्विका सा॥१८॥

उद्भ्रान्तदृगिति। उद्भ्रान्तदृक् उद्वावर्तितदृष्टिः, करजदन्तरणप्रसक्ता, अस्थिरचित्तवृत्तिः चञ्चलचित्ता, या सा वानरप्रकृतिः स्यात्। या दृष्टविप्रियवचोरचना बहुशो दृष्टप्रतिकूलवचना च, विटप्रहरणे कामुकताडने रक्ता प्रसक्ता सा खरसात्त्विका गर्दभसत्त्वा स्यात्॥१८॥

जातिरवस्था प्रकृतिः सत्त्वं यान्युक्तानि ज्ञेयममीषु।
प्राधान्यं प्रकृतेः किञ्चैनां संक्षेपेण निबोध गिरं नः॥१९॥

जातिरवस्थेति । जातिर्मृग्यादिः, अवस्था बाल्यादिः, प्रकृतिः श्लेष्मादिः, सत्त्वं देवादिः, यान्येतान्युक्तानि अमीषु प्रकृतेः प्राधान्यं ज्ञेयम् । किं च नः अस्माकम् एनां गिरं वक्ष्यमाणां सङ्क्षेपेण निबोध जानीहि ॥ १९ ॥

श्यामा कफप्रकृतिका वडवा मृगी वा
गन्धर्वयक्षनरनिर्जरसात्त्विका वा ।
बाला ऽथवाभिनवयौवनभूषिताङ्गी
सा भामिनी भवभुजां परमं रहस्यम् ॥२०॥

श्यामेति । श्यामा श्यामाङ्गी, कफप्रकृतिका श्लेष्मप्रकृतिः, वडवा नवाङ्गुलगुह्या, मृगी षडङ्गुलगुह्या, गन्धर्वसत्त्वा, नरसत्त्वा, देवसत्त्वा बाला षोडशाब्ददेशीया, अभिनवयौवनभूषिताङ्गी, तरुणीत्यर्थः । या एवंविधा सा भामिनी भवभुजां संसारसुखाभिलाषिणां परममुत्कृष्टं रहस्यं गोप्यम् । अनेन तासां श्लाघ्यता कथिता॥२०॥

जातौ च सत्त्वे वयसि प्रमाणे प्रधानमाहुः प्रकृतिं वधूनाम् ।
तथैव तासामुपचारमूचुः कर्णीसुताद्याः कृतिनो विधेयम् ॥२१॥

जाताविति । जातौ मृग्यादौ पद्मिन्यादौ वा, सत्त्वे देवादौ, वयसि बाल्यादौ, प्रमाणे गुह्यप्रमाणे च एतेषु वधूनां प्रकृतिमेव प्रमाणमाहुः। प्रकृतिरेव प्रमाणभूतेत्यर्थः । तथैव तासामङ्गनानां कर्णीसुताद्याः कामशास्त्रप्रणेतारः कृतिनः उपचारं विधेयमूचुः । कर्णीपुत्रप्रभृतयः पण्डिताः अङ्गनानामुपचारं वदन्तिस्मेत्यर्थः ॥ २१ ॥

स्वातन्त्र्यं पितृमन्दिरे निवसतिर्यात्रोत्सवे सङ्गति-
र्गोष्ठी पूरुषसन्निधावनियमो वासो विदेशे तथा ।
संसर्गः सह पुंश्चलीभिरसकृद्वृत्तेर्निजाया क्षतिः
पत्युर्वार्द्धकमीर्षितं प्रवसनं नाशस्य हेतुः स्त्रियाः॥२२॥

स्वातन्त्र्यमिति । स्वातन्त्र्यं स्वतन्त्रवृत्तिः, पितृमन्दिरे पितृगृहे निवसतिः स्थितिः,यात्रोत्सवे सङ्गतिः यात्रायामुत्सवे च सङ्गतिः,

पुरुषसंन्निधौ गोष्ठी, अनियमो नियमाभावः, विदेशे परदेशे वासो निवासः, पुंश्चलीभिरसतीभिः असकृत् संसर्गः,निजाया वृत्तेः स्वाचारस्य क्षतिर्नाशः, पत्युः ईप्सितस्य पत्युः वार्द्धकं वृद्धभावः, ईर्षितम् ईर्ष्यायुक्तत्वं, प्रवसनं प्रवास एतानि स्त्रिया नाशस्य व्यभिचारस्य हेतुः। एष्वन्यतमस्मिन् सति स्त्री पुंश्चली भवतीत्यर्थः ॥ २२ ॥

दारिद्र्यादसहिष्णुतामलिनताकार्पण्यकालाऽज्ञता-
पारुष्यादतिनिष्ठुरात् प्रणयिनो भूषानिषेधादपि ।
मिथ्यादोषविशङ्कनादतिशयोद्योगाद्वियोगात्तथा
कार्कश्याद्वपुषो व्रजन्ति नियतं वैराग्यमुच्चैः स्त्रियः ॥२३॥

दारिद्र्यादिति । प्रणयिनः कान्तस्य दारिद्र्याद्दारिद्र्यरूपात् निमित्तात्प्रणयिन एवासहिष्णुता असहनत्वं, मलिनता मालिन्यम् अनुज्ज्वलता, कार्पण्यकालाज्ञता कार्पण्यम् उचितत्यागविमुखता,कालाज्ञता सम्भोगकालानभिज्ञत्वं च, पारुष्यात्तत्परुषत्वेनातिनिष्ठुरत्वात्प्रणयिनः प्राणेश्वरस्य भूषानिषेधादलङ्कारनिषेधाद्,मिथ्यादोषविशङ्कनात् नार्यामविद्यमानदोषारोपात्, अतिशयोद्योगादतितृष्णतयाऽमत्युद्योगाविरतत्वा,द्वियोगा,द्विरहाद्वपुषः कार्कश्यात्, स्त्रिय एते-वैराग्यं व्रजन्ति विरक्ता भवन्तीत्यर्थः ॥ २३ ॥

ततः किमित्यत आह

नैनं पश्यति नास्य नन्दति सुहृन्मित्रे प्रतीपस्थिति-
र्योगे सीदति हृष्यतीव विरहे माष्ट्र्याननं चुम्बिता ।
नासादिच्छति मानभीर्ष्यति वचः प्रत्युत्तरं नार्पये-
त्स्पर्शादुद्विजते स्वपित्युपगता शय्यां विरक्ता सती ॥२४॥

नैनंपश्यतीति । नारी विरक्ता सती एनं कान्तं न पश्यति। अस्य कान्तस्य सुहृन्मित्रे सुहृदो मित्राणि च न नन्दति न पूजयतीत्यर्थः। सुहृन्मित्रयोस्तारतम्यं कल्प्यम्। प्रतीपस्थितिः प्रतिकूलस्थितिर्भवति, पत्युः परोक्षे निवसति, योगे संयोगे सीदति क्लिश्यति, वियोगे हृष्यति किलश्यति, विरहे वियोगे हृष्यति हृष्टा भवति, इवशब्दः प्राचुर्ये। चुम्बिता सती आननं मार्ष्टि, हस्तेन मुखमार्जनं करो-

तीति यावत् । तस्मात्कान्तादात्मनः मानं सम्मानं नेच्छति, ईर्ष्यति ईर्ष्यां करोति, प्रत्युत्तरं च नार्पयेत् पृष्टा सती प्रत्युत्तरं न ददाति, स्पर्शात् कान्तस्पर्शादुद्विजते उद्विग्ना भवति, शय्यामुपगता स्वपिति कृच्छ्रात् शय्यां गतापि सुप्ता भवति,विरक्ता सत्येवं करोति ॥ २४ ॥

उक्तं गुणपताकायामनुरागेङ्गितं च यत् ।
अजातजातभोगानां तत्साधारणमुच्यते ॥२५॥

उक्तमिति । गुणपताकायां शास्त्रे यदनुरागेङ्गितं प्रेमलक्षणमुक्तम् । अजातजातभावानां च साधारणं साधारणभूतं तदुच्यते । अजातभावाः पूर्वमकृतसम्भोगाः ।जातभावाः कृतसम्भोगाः। तासां सर्वासां च साधारणं समानं तच्चेङ्गितमुच्यते ॥ २५ ॥

वैराग्यलक्षणान्युक्त्वा अनुरागलक्षणान्यपि वक्तुमारभते ।

ओष्ठाग्रं स्फुरतीक्षणे विचलतः कूपोदरे मत्स्यव-
द्धम्मिल्लः कुसुमाश्रितो विगलितः प्राप्नोति बन्धं पुनः ।
प्रच्छन्नौ व्रजतः स्तनौ प्रकटतां श्रोणीतटं दृश्यते
नीवी च स्खलति स्थितापि सुदृढं कामेङ्गितं योषिताम् ॥२६॥

ओष्ठाग्रमिति । ओष्ठाग्रं स्फुरति स्पन्दते, ईक्षणे नेत्रे कूपोदरे मत्स्यवद्विचलतः कूपोदरस्थमत्स्य इव नयने चञ्चले भवतः । कुसुमाश्रितो धम्मिल्लः केशबन्धो विगलितः सन् पुनश्च बन्धं प्राप्नोति, प्रच्छन्नौ स्तनौ प्रकटतां प्रकाशतां व्रजतः, तावपि प्रकाशयतीत्यर्थः । श्रोणीतटं जघनस्थलं दृश्यते, केनचिद्व्याजेन प्रदर्शयतीति भावः । सुदृढं स्थितापि नीवी स्खलति इति योषितां कामेङ्गितं कामचेष्टा प्रीतिलक्षणमिति यावत् ॥२६॥

प्रत्यक्षं कामेङ्गितमुक्त्वा परोक्षमप्युच्यते ।

सौभाग्यरूपपरिहासगुणानुराग-
सङ्कीर्त्तनेन दयितस्य च लब्धसौख्यम् ।
सम्बन्धिमित्रमुखदर्शनदत्तदूर-
तोषं परोक्षमपि कामगुणेङ्गितं स्यात् ॥२७॥

सौभाग्येति । दयितस्य कान्तस्य सम्बन्धिनां सौभाग्यस्य सुभगत्वस्य रूपस्य वेषकृतसौन्दर्यस्य परिहासस्य गुणानामनुरागस्य च सङ्कीर्तनेन यस्य कस्य चिन्मुखात्संकीर्त्य सङ्कीर्तितान्येतानि श्रुत्वा लब्धसौख्यं प्राप्तसौख्यम्, श्रवणात्तदैव सौख्यं जायत इत्यर्थः । सम्बन्धिमित्रमुखदर्शनदूरदत्ततोषं दयितस्य सम्बन्धिनां श्वशुरादीनां मित्राणां सुहृदां सखीनां वा मुखदर्शनेन दूरं दत्तः तोषो यस्मिन् तत् परोक्षमपि अप्रत्यक्षमपि कामगुणेङ्गितं स्यात्, कामगुणप्रकाशकमित्यर्थः। सर्वप्रत्यक्षमपि कामगुणेङ्गितं स्यात्, उक्तमिदमप्रत्यक्षं कामगुणेङ्गितम् ॥ २७ ॥

अध्वक्लान्ततनुर्नवज्वरवती नृत्यश्लथाङ्गी तथा
मासैकप्रसवा ददाति सुरते षण्मासगर्भा सुखम् ।
विख्याता विरहस्य सङ्गमविधौ क्रुद्धप्रसन्ने ऋतु-
स्नाने नूतनसङ्गमे मधुमदे रागास्पदं योषितः ॥२८॥

अध्वक्लान्तेति । अध्वक्लान्ततनुर्मार्गगमनखिन्नदेहा, नवज्वरवती अभिघातमूलैर्नवीनज्वारिता, नृत्यश्लथाङ्गी नाट्येन श्लथाङ्गी, तथा मासैकप्रसवा, षण्मासगर्भा च सुरते सुखं ददाति, विरहस्य सङ्गमविधौ वियोगानन्तरं सम्भोगे, क्रुद्धा सती प्रणयकलहानन्तरं प्रसन्ना, ऋतुस्नातानूतनसङ्गमे मधुमदे मधुपानमदे च सति योषितोऽङ्गनाया रागस्य स्नेहस्य आस्पदं विख्यातम् एतेष्ववसरेषु सुखप्रदेत्यर्थः ॥ २८ ॥

प्रथममदनयुद्धे योषितः स्वल्पभावाः
कथमपि चिरकालात्तत्प्रियोगं लभन्ते ।
धृतगुरुतरभावाः क्षिप्रकाला द्वितीये
भवति तु विपरीतः पूरुषेषु क्रमोऽयम् ॥२९॥

इति श्रीरतिरहस्ये सामान्यधर्माधिकारो
नाम चतुर्थः परिच्छेदः ॥ ४ ॥



प्रथमेति । प्रथममदनयुद्धे प्रथमसुरते योषितो ऽङ्गनाः स्वल्पभावाः सत्यः, भावः श्लथावयवत्वम्, कथमपि कथं चिच्चिरकालात्तृप्तियोगं लभन्ते । द्वितीयसम्भोगे तु धृतगुरुतरभावाः सत्यः शीघ्रकालेन तृप्ता भवन्ति । अयं क्रमः, पुरुषेषु नरेषु विपरीतो भवति । पुरुषाः प्रथमसम्भोगे धृतगुरुतरभावाः क्षिप्रकालात्तृप्ता भवन्ति, द्वितीयसम्भोगे स्वल्पभावाः चिरकालात् तृप्तिं लभन्ते इत्यर्थः ॥ २६ ॥

इति श्रीकाञ्चीनाथकृतौ रतिरहस्यदीपिकायां

सामान्यधर्म्माधिकारश्चतुर्थः परिच्छेदः ॥ ४ ॥



प्रायोऽङ्गनानां पुर एव तृप्तेर्भावावसानं पुरुषा लभन्ते ।
इदं तु विज्ञाय तथोपचार्या यथा द्रवन्त्यग्रत एव नार्यः ॥१॥

प्रायोऽङ्गनानामिति । प्रायः प्रचुरमङ्गनानां तृप्तेः पुर एव पुरुषाः भावावसानं लभन्ते तृप्तिं यान्तीत्यर्थः । इदं विज्ञाय तथोपचार्या यथा नार्य्यः पुरुषापेक्षयापि प्रथममेव द्रवेयुः ॥ १ ॥

अभ्यर्थिता बाह्यरतेन भूयो या देशकालप्रकृतीः प्रतीक्ष्य ।
श्लथास्तरुण्यः प्रबलानुरागा द्रवन्ति तृप्यन्ति च शीघ्रमेव ॥२॥

अभ्यर्थितेति । देशकालप्रकृतीः देशो लाटादिः, कालः शीतोष्णादिः, प्रकृतिः श्लेष्मादिः, कंचन अपेक्ष्य बाह्यरतेनालिङ्गनादिना भूयो मुहुर्मुहुरभ्यर्थिता, स्वीकृता इत्यर्थः । अर्थाच्चुम्बनादिषु पूर्वं प्रबलानुरागा श्लथाः शिथिलीभूताः सत्यः द्रवन्ति शीघ्रमेव तृप्यन्ति आलिङ्गनचुम्बनादिपूर्वं प्रार्थिता द्रवन्ति तृप्यन्तीति भावः ॥ २ ॥

मन्दकालविसृष्टेः पुरुषस्य चिरकालरतेरुपायमाह

कल्लोलिनीकाननकन्दराद्रौ दुःखाश्रये वार्पितचित्तवृत्तिः ।
मृदुक्रमारम्भमभिन्नधैर्यः श्लथोपि दीर्घं रमते रतेषु ॥३॥

कल्लोलिनीति । कल्लोलिन्यो नद्यः, काननानि वनानि, कन्दरा गुहाः इत्यादिषु विचित्रेष्वन्येष्वपि विषयेषु दुःखाश्रयावस्थाने विषये वा अर्पितचित्तवृत्तिः पुरुषः मृदुक्रमारम्भं मन्दक्रमारम्भं यथा तथा अभिन्नधैर्यस्तथा दीर्घरतेषु रमते । मन्दकालविसृष्टिः श्लथ उच्यते॥३॥

शाखामृगमतिचपलं क्षितिरुहशाखागतिं विचिन्तयतः ।
ध्वजमुखपर्यन्तगतं फलबीजं पुरुषस्य जातु नो गलति ॥४॥

शाखामृगमिति । क्षितिरुहः वृक्षस्य शाखायां गतिर्गमनं यस्य एतादृशम् अतिचपलं नितान्तचञ्चलं शाखामृगं कपिं विचिन्तयतः पुरुषस्य नरस्य ध्वजमुखपर्यन्तगतं लिङ्गाग्रप्राप्तं फलबीजं वीर्यं जातु कदाचिदपि नो गलति न निस्सरति ॥ ४ ॥

आखेटके शिल्पविधौ च नृत्येप्यभ्यासयोगादुपचीयते या ।
वीणास्वनाद्यैर्विषयैर्बुधास्तामाभ्यासिकीं प्रीतिमुदाहरन्ति ॥५॥

आखेटेति । आखेटके मृगयायां, शिल्पविधौ शिल्पकार्ये, नृत्येऽपि अभ्यासयोगात् वीणास्वनाद्यैर्विषयैश्च या प्रीतिरुपचीयते संपद्यते तामाभ्यासिकीं प्रीतिमुदाहरन्ति कथयन्तीत्यर्थः । बुधा इति शेषः ॥५॥

नाभ्यासतो नो विषयाद्भवेद्या संकल्पमात्रादभिमानजा सा ।
क्लीबस्य नार्याश्च यथोपदिष्टैः स्त्रीपुंसयोः श्लेषणचुम्बनाद्यैः ॥६॥

नाभ्यासतइति । नाभ्यासतोऽभ्यासं विना नो विषयाद्विषयं विना संकल्पमात्रात्केवलसङ्कल्पादेव "सङ्कल्पः कर्म मानसम्" इत्यमरः । या प्रीतिर्जायते साभिमानजा । कुत्रेत्याशङ्कायामाह क्लीबस्य षण्डस्य, नार्याश्च । स्त्रीपुंसयोरभिमतयोरुपदिष्टैः श्लेषणचुम्बनाद्यैर-भिमानजा प्रीतिर्यथा भवति तथैवेति योज्यम् । यथोपदिष्टे चुम्बनादौ इति सप्तम्यन्तपाठे च श्लेषणमालिङ्गनं, चुम्बनं चादिर्यस्मिंस्तस्मिन् व्यापारे विषये या प्रीतिरुपदिष्टा सा स्त्रीपुंसयोरित्यभिमानादेव जायत इत्यर्थः । आलिङ्गनचुम्बनादावित्यस्य विशेषणसमासतया यथोपदिष्टे इति सप्तम्यन्तं पदम् उपदिष्टे गूहनचुम्बनादौ यथा प्रीति-स्तथैवेति योज्यम् ॥ ६ ॥

साहश्यतो ऽन्यस्य भवेत्क्वचिद्या तां प्रत्ययोत्थां कथयन्ति धीराः।
उत्पद्यते या विषयैः प्रधानैः प्रीतिं तु तां वैषयिकीं वदन्ति ॥७॥

सादृश्यतइति। अन्यस्य सादृश्यतः साम्यात् क्वचिद् या प्रीतिर्भवेत् स्त्रियः पुरुषस्य वा वल्लभजनसदृशजनं दृष्ट्वा या प्रीतिर्जायते तां प्रीति धीराः प्रत्ययोत्थां विश्वासजातां कथयन्ति। या प्रधानैर्मुख्यैर्विषयैः स्रक्चन्दनाद्यैरुत्पाद्यते तां प्रीतिं वैषयिकीं वदन्ति ॥ ७ ॥

स्वभावसात्म्यं कथितं यदेतद् यो जात्यवस्थादिकृतो विशेषः।
यद्वक्ष्यमाणं स्फुटदेशसात्म्यं तदाकलय्य प्रमदामुपेयात् ॥८॥

स्वभावेति। स्वभावसात्म्यं यदेतत् कथितं यो जात्यवस्थादिकृतोविशेषस्तत्स्वभावसात्म्यं, यद्वक्ष्यमाणं स्फुटदेशसात्म्यं तद्देशसात्म्यमित्यर्थः। तदाकलय्य प्रमदामङ्गनामालिङ्गनादिक्रमेणोपेयाद् गच्छेत् ॥ ८ ॥

अथ तत्तद्देशीयस्त्रीस्वभावः कथ्यते।

शुचिप्रचारा नखदन्तचुम्बाद्विषस्त्रियो मध्यमदेशजाताः।
तथाविधाश्चित्ररतानुरक्ता अवन्तिबाह्लीकभुवो भवन्ति ॥९॥

शुचिप्रचारेति। मध्यदेशजाताः स्त्रियः "मध्यं विन्ध्यहिमालयो" रित्यमरः। शुचिप्रचाराः शुद्धप्रचाराः, नखदन्तचुम्बाद्विषः नखदन्तक्षतचुम्बनविमुखा भवन्ति। अवन्तिबाह्लीकभुवः अवन्तिदेशजाता, बाह्लीकदेशजाताश्च तथाविधा मध्यमदेशजातस्त्रीसदृश्यः, चित्ररतानुरक्ताः विचित्रसुरतानुरक्ताश्च भवन्ति ॥ ९ ॥

आश्लेषलोला नखदन्तकृत्यैर्विरज्यते हृष्यति चातिघातैः।
आभीरजा चुम्बनहार्यचित्ता स्यान्मालवी चापि तथाविधैव॥१०॥

आश्लेषलोलेति। आभीरजा आभीरदेशजाङ्गना आश्लेषलोला आलिङ्गनासक्ता नखदन्तकृत्यैर्विरज्यते नखक्षतदन्तक्षतविरक्ता भवन्ति। अभिघातैस्ताडनैर्हृष्यन्ति, चुम्बनहार्यचित्ता चुम्बनेन हार्यं वशीकार्यं चित्तं यस्याः सा तथोक्ता। मालवी मालवदेशजापि तथाविधैव आभीरजातितुल्यैव ॥ १० ॥

इरावतीसिन्धुशतद्रुतीरे विपाड्वितस्तासरिदन्तराले।
याश्चन्द्रभागातटजाश्च नार्यस्ता औपरिष्टेन विना न साध्याः॥११॥

इरावतीति। इरावतीसिन्धुशतद्रुतीरे इरावती, सिन्धुः, शतद्रुश्च नदीभेदाः एतासां तीरे विपाड्वितस्तासरिदन्तराले विपाट् विपाशा नामा नदी, वितस्ता नदीविशेषः, ते च ते, अनयोरन्तराले, चन्द्रभागातटजाश्च चन्द्रभागानदीतीरजा नार्यः औपरिष्टेन विना न साध्याः। औपरिष्टपूर्वमेव साध्या इत्यर्थः। उपरिष्टात्सम्बन्धो औपरिष्टम्। औपरिष्टं नाम भगभूषणम्। पूर्वोक्तनदीतीरजा नार्यो भगभूषणमन्तरेण न तृप्यन्तीत्यर्थः॥ ११॥

फुल्लासिधम्मिल्लभरा कृशाङ्गी पीनस्तनी चारुविलोचना च।
प्रियोक्तिराभ्यन्तरबाह्यभोगसक्ता विरक्तापि च गुर्जरी स्यात्॥१२॥

फुल्लेति। गुर्जरी गुर्जरदेशजाता नारी फुल्लासिधम्मिल्लभरा फुल्लकेशभरा, कृशाङ्गी क्षीणदेहा, पीनस्तनी स्थूलकुचा, चारुविलोचना सुन्दरनयनी, प्रियोक्तिः प्रियभाषिणी, आभ्यन्तरबाह्यभोगसक्ता आभ्यन्तरबाह्यभोगयोः सक्ता लग्ना विरक्तापि च स्यात्॥ १२॥

मन्दाभिघातैर्नखदन्तकृत्यैर्भृशं द्रवन्ती परिरम्भलोला।
प्रचण्डवेगा सुकुमारगात्री रतोत्सवे नृत्यति लाटनारी॥१३॥

मन्दाभिघातेति। मन्दाभिघातैर्मन्दताडनैः, नखदन्तकृत्यैर्नखदन्तक्षतैर्भृशं द्रवन्ति, परिरम्भलोला आलिङ्गनोत्सुका, प्रचण्डवेगा, सुकुमारगात्री कोमलगात्री, लाटनारी रतोत्सवे नृत्यति। लाटनारी लाटदेशजा॥ १३॥

चारित्रमुद्रामतिलंघयन्ती भवत्यनाचाररता रतार्त्तिः।
प्रयुञ्जती वाडवकर्मनर्माण्यान्ध्री पुरन्ध्री धृतसौकुमार्या॥१४॥

चारित्रमुद्रामिति। चारित्रमुद्रां लोकमर्यादामतिलङ्घयन्ती, अनाचाररता, कामार्त्ता सती व्यभिचरतीत्यर्थः। वाडवकर्म्मनर्म्माणि प्रयुङ्क्ते। वाडवकर्म्मणा करणविशेषेण नर्म्माणि क्रीडाः प्रयुङ्क्ते "गृ-

ह्लाति भगोष्ठपुटेन यदि ध्वजम्स्फुरदित्यपि वाडवकं" स्फुरद् मन्द-वीर्यत्वान्निश्चेष्टं ध्वजं भगोष्ठपुटेन गृह्णाति चेत् वाडवकं करणं भवति। धृतसौकुमार्या सौकुमार्यं सुकुमारता । आन्ध्री पुरन्ध्री आन्ध्रदेशीया स्त्री एवंविधा भवतीत्यर्थः ॥ १४ ॥

विमृद्यमानाः कृतकध्वजेन द्रवन्ति हृष्यन्ति दृढप्रहारैः ।
स्त्रीराज्यजाः कौशलजाश्च नार्यः प्रचण्डकण्डूतिभगा भवन्ति॥१५॥

विमृद्येति । स्त्रीराज्यजाः स्त्रीराज्यं नाम उत्तरस्यां दिशि कस्मिंश्चित् प्रदेशे स्त्रिय एव तिष्ठन्ति तत्रस्था नार्यश्च कोशलजाश्च कोशलदेशजा एताः प्रचण्डकण्डूतिभगाः प्रचण्डा अधिका कण्डूतिः कण्डूर्येषां ते प्रचण्डकण्डूतयो भगा यासां तास्तथोक्ताः, स्त्रीराज्यजाः कोशलजाश्च नार्य एवंविधा भवन्तीत्यर्थः । अत एव कृतकध्वजेन दन्तलोहादिकृतेन कृत्रिमध्वजेन विमृद्यमानाः कृतसुरताः दृढप्रहारैर्द्रवन्ति हृष्यन्तीत्यर्थः ॥ १५ ॥

साक्षेपसग्राम्यगिरो विलज्जा रते चतुःषष्टिकलानुरक्ताः ।
नार्यो महाराष्ट्रभवास्तथैव रहःस्थिताः पाटलिपुत्रिकाः स्युः॥१६॥

साक्षेपेति । सग्राम्यसाक्षेपगिरः ग्राम्या भण्डकथाः, आक्षेपः प्रणयतिरस्कारस्तत्सहिता गिरो यासां तास्तथोक्ताः, विलज्जा निर्लज्जाः रते सुरते चतुःषष्टिकलानुरक्ताः चतुःषष्टिकलारागिण्यः, कलानां चतुःषष्टिकलानां प्रयोगाङ्गत्वात् । एके आहुः, आलिङ्गनचुम्बननखच्छेदनदशनच्छेदनसंवेशनवशीकृतपुरुषायितौपरिष्टकानामष्टानामष्टधा विकल्पभेदाच्चतुःषष्टिरिति बाभ्रवीयाः । विकल्पवर्गाणामष्टानां न्यूनाधिकत्वदर्शनात्प्रहणनविरुतपुरुषोपसृप्तकचित्ररतादीनामन्येषामपि वर्गाणामिह प्रवेशनात् प्रायोवादोऽयम् । यथा सप्तपर्णो वृक्षः, पञ्चवर्णो बलिरिति ॥

एवमेतां चतुःषष्टिं बाभ्रव्येण प्रकीर्तिताम् ।
प्रयुञ्जानो वरस्त्रीषु सिद्धिं गच्छति नायकः ॥
ब्रवन्नप्यन्यशास्त्राणि चतुःषष्टिविवर्जितः ।
विद्वत्संसदि नात्यर्थं कथासु परिपूज्यते ॥
वर्जितोऽप्यन्यविज्ञानैरेतया यस्त्वलङ्कृतः ।

स गोष्ठ्यां नरनारीणां कथास्वग्रं विगाहते ॥
विद्वद्भिः पूजितामेनां खलैरपि सुपूजिताम्।
पूजितां गणिकासङ्घैर्नन्दिनीं को न पूजयेत् ॥
नन्दिनी सुभगा सिद्धा सुभगङ्करणीति च।
नारीप्रियेति चाचार्यैः चतुःषष्टिरुदाहृता ॥
कन्याभिः परयोषिद्भिर्गणिकाभिश्च भावतः।
वीक्ष्यते बहुमानेन चतुःषष्ट्यां विचक्षणः ॥

इति वात्स्यायनः। महाराष्ट्रभवा नार्यः पाटलिपुत्रजाश्च पाटलिपुत्रं पुष्पपुरं तत्रभवाः स्त्रियश्च रहसि स्थिताश्च तथैव स्युः ॥ १६ ॥

अन्तर्बहिर्बाह्यरतेन भूयो विमृद्यमानाः क्रमशो द्रवन्त्यः।
प्रभूतकन्दर्पजला द्रविड्यो रतिं लभन्ते प्रथमे रतेपि ॥१७॥

अन्तरिति। प्रभूतमधिकं कन्दर्पजलं रताम्बु यासां ताः, भूयः अन्तर्बहिर्बाह्यरतेन विमृद्यमानाः, अन्तर्बाह्यरतमस्ति। तद्यथा, अङ्गुल्या क्रियमाणं बाह्यरतमन्तर्बाह्यरतम्, बहिर्बाह्यरतमालिङ्गनादि। एवमुभयथा बाह्यरतेन विमृद्यमानाः क्रमशः क्रमेण द्रवन्त्यः द्रविड्या द्रविडाङ्गनाः प्रथमं रते प्रथमे सुरते रतिं तृप्तिं लभन्ते रतिलाभं प्राप्नुवन्ति स्रस्ततावपुषीत्यादिवक्ष्यमाणरतिलाभमिति यावत् ॥ १७ ॥

प्रच्छादयन्त्यः स्वशरीरदोषं पराङ्गदोषं बहुशो हसन्त्यः।
सर्वसहा मध्यमवेगभाजः स्त्रियो रमन्ते वनवासदेश्याः ॥१८॥

प्रच्छादयन्त्यइति। वनवासदेश्याः वनवासजाः स्त्रियः स्वशरीरदोषं स्वशरीरे विद्यमानं स्थितमवगुणं प्रच्छादयन्त्यः, पराङ्गदोषं पराङ्गे विद्यमानं दोषम् अवगुणम् बहुशो बहुधा हसन्त्यः, सर्वसहा नखक्षतादिसहाः मध्यमवेगभाजः वीर्यं बहुक्षताघातसहत्वमित्यत्र श्लोकोक्तमध्यमवेगभाजः सत्यो रमन्ते ॥ १८ ॥

मृद्वङ्गयष्टिर्मधुराभिधाना संश्लेषचुम्बोत्कलिकाल्पवेगा।
कठोरचेष्टा विरता रताजौ गौडी च वङ्गी च नितम्बिनी स्यात् ॥१९॥

मृद्वङ्गयष्टिरिति । गौडी गौडदेशजा, वङ्गी वङ्गदेशजा नितम्बिनी मृद्वङ्गयष्टिः कोमलाङ्गी, मधुराभिधाना रम्यनामधेया, संश्लेषणचुम्बनोत्कलिका आलिङ्गनचुम्बनोत्सुका, अल्पवेगा मन्दवेगा, कठोरचेष्टा क्रूरव्यापारा, रताजौ सुरते एतादृशी स्यात् ॥ १९ ॥

शिरीषमृद्वी बहुशो द्रवन्ती रते विलीना करमात्रसङ्गात् ।
अनङ्गरङ्गैकरसा प्रियोक्तिः स्यात् कामरूपप्रभवा पुरन्ध्री ॥२०॥

सिरीषमृद्वीति । कामरूपप्रभवा कामरूपदेशजा पुरन्ध्री स्त्री । "प्राग्ज्योतिषं कामरूप" मित्यमरः । तन्नगरं यत्रास्ति तद्देशजा नारी शिरीषमृद्वी शिरीषकुसुमकोमलाङ्गी, बहुशो वारंवारं द्रवन्ती, करसङ्गमात्रात् प्रियजनहस्तस्पर्शमात्रादेव रते विलीना द्रवीभूता, अनङ्गरागैकरसा रतोत्सवैकरसा, प्रियोक्तिः प्रियभाषिणी भवति ॥ २० ॥

उत्कली बहुलरागविह्वला दन्तघातकरजक्षतप्रिया ।
औपरिष्टकरता विशेषतो ह्यङ्गवङ्गयुवतिः कलिङ्गजा ॥२१॥

विविधनखविकारैः प्रौढपाणिप्रहारै
र्जनितपरममोदामौपरिष्टप्रकारैः ।
अविरतरतयुद्धाकाङ्क्षिणीं वीतलज्जां
वदति बहलरागामुत्कलीं मूलदेवः ॥ २२ ॥

विविधेति । विविधनखविकारैः नानाप्रकारनखाङ्कैः प्रौढपाणिप्रहारैः प्रौढैरमन्दैः पाणिप्रहारैर्मुष्टिताडनैः, औपरिष्टकप्रकारैर्भगभूषणादिभिर्जनितपरममोदां प्रकटितबहुहर्षाम्, अविरतरतकाङ्क्षिणीं निरन्तरसुरततन्त्राभिलाषिणीं, वीतलज्जां निर्लज्जां, बहुरागामधिकस्नेहां, युवतींमूलदेव उत्कलीम् उत्कलदेशीयां वदति ॥ २२ ॥

इति किमपि यदूचे देशसात्म्यं मुनीन्द्रो
युवतिरितरदेश्याप्यूहनीया तथैव ।
अनुभवमनुसृत्य स्वं च सात्म्यं भवेद्यद्
भवति सहजसात्म्यं देशसात्म्याद्बलीयः ॥२३॥

इति किमपि यदुक्तं योषितां देशसात्म्यं
स्फुटमकथितदेशेप्युन्नयेत्तद्दिशा तत् ।
सहजमपि च सात्म्यं भावयेत् स्वानुभूत्या
बलवदुभयमध्ये विद्धि सांसिद्धिकं यत् ॥ २४ ॥

इतीति । इत्यनेन प्रकारेण योषितां किमपि देशसात्म्यं स्फुटमुक्तं, तदकथितदेशेऽनुक्तदेशेऽपि तद्दिशा तेनैव मार्गेण तत्तद्देशसात्म्यमुन्नयेत् । युक्त्या निर्दिशेत् । स्वानुभूत्या स्वानुभवेन सहजं सात्म्यमपि भावयन्नुभयमध्ये देशसहजसात्म्ययोर्म्मध्ये यत्सांसिद्धिकं स्वाभाविकं तद्बलवद्विद्धि प्रधानं जानीहि । स्वत एव संसिद्धं सहजं बलवदित्यर्थः ॥ २४ ॥

इति प्रमाणं समयं च वेगं स्वभावदेशोद्भवसात्म्यभेदाद् ॥
स्वस्थामवस्थां प्रकृतिं प्रतीत्य प्रयुञ्जते बाह्यरतं रतं च ॥ २५ ॥

इतीति । इति पूर्वोक्तप्रकारेण प्रमाणं शशादि, समयं चिरमन्दमध्याविसृष्टिलक्षणं, वेगं मन्दमध्यचण्डवेगं, स्वभावसात्म्यं, देशोद्भवसात्म्यं; देशः लाटादिः, सात्म्यं श्लथत्वं तयोर्भेदात् स्वीयाम् अवस्थां बाल्यादि, प्रकृतिं श्लेष्मादि एतानि प्रतीत्य ज्ञात्वा बाह्यरतमालिङ्गनादि रतमात्रं च प्रयुञ्जते एतानि परीक्ष्यैव कामुका बाह्यरतं कुर्वन्तीत्यर्थः २५

आदौ रतं बाह्यमिह प्रयोज्यं तत्रापि चालिङ्गनपूर्वमेतत् ।
अजातजातस्मरकेलिभेदाद् द्विधा पुनर्द्वादशधा च तत् स्यात् २६

इति श्रीकोकोककृते रतिरहस्ये देशज्ञानाधिकारो
नाम पञ्चमः परिच्छेदः ।

आदाविति । इह रतद्वये आदौ बाह्यरतं प्रयोज्यं, बाह्यरते एतद्बाह्यरतमालिङ्गनपूर्वं प्रयोज्यं, प्रथममालिङ्गनं प्रयुज्य पश्चाच्चुम्बनादि प्रयोज्यमिति भावः । अजातजातस्मरकेलिभेदाज्जातस्मरकेलिभेदादजातस्मरकेलिभेदाच्च तदालिङ्गनं द्विधा भवति द्विप्रकारं भवति, तदेव द्विप्रकारमालिङ्गनं पुनर्द्वादशधा स्यात् द्वादशप्रकारं स्यात् ,

अभुक्तायां स्पृष्टकादीनि चत्वारि उपभुक्तायां लतावेष्टितादीनि अष्ट-धालिङ्गनानि ॥ २६ ॥

इति श्रीकाशीनाथकृतायां रतिरहस्यदीपिकायां
देशज्ञानाधिकारो नाम पञ्चमः परिच्छेदः ।



अथालिङ्गनभेदा उच्यन्ते ।

यद्योषितः संमुखमागताया अन्यापदेशाद्व्रजतो नरस्य ।
गात्रेण गात्रं घटते रतज्ञा आलिङ्गनं स्पृष्टकमेतदाहुः ॥१॥

यद्योषित इति । सम्मुखागतायाः संमुखमभिमुखमागताया योषितो गात्रेणाऽन्यापदेशादन्यव्याजाद् व्रजतो गच्छतो नरस्य गात्रं यद् घटते तदालिङ्गनं स्पृष्टकमाहुः, रतज्ञास्तदालिङ्गनं स्पृष्टकाख्यमाहुरित्यर्थः ॥ १ ॥

यद्गृह्णती किञ्चन वञ्चिताक्षं स्थितोपविष्टं पुरुषं स्तनाभ्याम् ।
नितम्बिनी विध्यति तां च गाढं गृह्णात्यसौ विद्धकमुच्यते तत् ॥२॥

यद्गृह्णतीति । वञ्चिताक्षं यत्र क्वापि वीक्षमाणं स्थिता नितम्बिनी उपविष्टं स्थितं पुरुषम् उपविष्टा नितम्बिनी अङ्गना किञ्चन गृह्णती सती स्तनाभ्यां विध्यति तां च गाढमसौ वा गृह्णाति एतद्विद्धकमुच्यते ॥२॥

यात्रोत्सवादौ तिमिरे घने वा यद्गच्छतोः स्याच्चिरमङ्गसङ्गः ।
उद्घृष्टकं तत्पुनरेव कुड्ये निपीडनात्पीडितसंज्ञकं स्यात् ॥३॥

यात्रोत्सवेति । यात्रोत्सवादौ यात्रायामुत्सवादिषु च, घने तिमिरे अन्धकारे वा गच्छतोः स्त्री पुंसयोश्चिरमङ्गसङ्गः अङ्गस्य सङ्गः स्पर्शः स्यात् तदुद्घृष्टकमालिङ्गनमाहुः । तदेव कुड्ये भित्तौ निपीडनात् पीडितसंज्ञितं पीडितनामधेयं स्यादिति, भावः ॥ ३ ॥

भावप्रबोधार्थमजातरत्योश्चतुर्विधोक्ता परिरम्भलीला ।
संजातरत्योस्त्वनुरागवृद्ध्यै बुधैरसावष्टविधोपदिष्टा ॥४॥

भावप्रबोधेति। अजातरत्योः पूर्वमकृतरत्योः स्त्रीपुंसयोर्भावप्रबोधार्थम् इयं चतुर्विधा परिरम्भलीला उक्ता। संजातरत्योः कृतसम्भोगयोस्तु तथा न भवति, अनुरागवृद्ध्यै अनुरागवर्द्धनाय बुधैः पण्डितैः असौ परिरम्भलीला अष्टविधा अष्टप्रकारोक्ता ॥ ४ ॥

प्रियमनुकृतवल्लीविभ्रमा वेष्टयन्ती
द्रुममिव सरलाङ्गी मन्दसीत्का तदीयम् ।
वदनमुदितखेलाक्रन्दमाचुम्बनार्थं
नमयति विनमन्ती तल्लतावेष्टितं स्यात् ॥५॥

प्रियमिति। अनुकृतवल्लीविभ्रमा वल्लीसदृशविभ्रमशालिनी अङ्गना द्रुममिव प्रियं प्राणेश्वरं वेष्टयन्ती सरलाङ्गी मन्दसीत्का मन्दसीत्कारा सती तदीयं वदनं प्रियमुखम् आचुम्बनार्थम् समन्तात् यथा भवति तथा चुम्बनाय स्वयं विशेषेण नमन्ती प्रकटितमिथ्यारोदनं यथा तथा स्वं वदनं नमयति यत् तल्लतावेष्टितं स्यात् । एवमुक्तं भवति प्रिये अभिमुखं स्थिते सति वनिता स्वपादाभ्यां तदूरुं समावेष्ट्य कक्षयोः कण्ठे च स्वबाहुलताभ्यामावेष्ट्य चुम्बनाय स्वयं नता सती पत्युर्मुखचुम्बनार्थं स्वं मुखमप्यवनमयेत्तल्लतावेष्टिताख्यमालिङ्गनं भवतीति भावः। सर्वत्रालिङ्गनानामन्वर्थान्येव नामानि ॥ ५ ॥

रमणचरणमेकेनाङ्घ्रिणाक्रम्य खिन्नं
श्वसितमपरपादेनाश्रयन्ती तदूरुम् ।
निजमथ भुजमेकं पृष्ठतोऽस्यार्पयन्ती
पुनरपरभुजेन प्रार्थयन्ती तदंसम् ॥६॥

स्थितपतिमधिकृत्य प्रोक्तमाश्लेषयुग्मं
सपदि च कथनीयाः सुप्तसंश्लेषभेदाः ।
तरुमिव कमितारं चुम्बनार्थाधिरोढुं
यदभिलषति नारी तच्च वृक्षाधिरूढम् ॥७॥

रमणेति । रमणचरणं प्रियपादमेकेन स्वेनाङ्घ्रिणा आक्रम्य खिन्नं श्वसितं संपृक्तनिश्वासं यथा भवति तथा अपरपादेन तदूरुं रमणस्योरुमाश्रयन्ती निजं स्वकीयमेकं भुजम् अस्य रमणस्य पृष्ठतः पश्चाद् अर्पयन्ती पार्श्वभागे व्यापारयन्ती पृष्ठमालिङ्गयन्तीत्यर्थः । पुनरितरभुजेन तदंसं तस्य रमणस्यांसं भुजाग्रं प्रार्थयन्ती सती वनिता अभिमुखस्थितं कमितारं पतिं चुम्बनार्थी चुम्बनमर्थः प्रयोजनं यस्याः सा चुम्बनार्थी चुम्बनं कर्त्तुमित्यर्थः । अधिरोढुमभिलषति यत्तद् वृत्ताधिरूढमालिङ्गनमाहुः । एतद्भेद एवापर उच्यते । रमणजानूनि आत्मपादाङ्गुलीभिराक्रम्य पाणिभ्यां तत्पार्श्वमालम्ब्य प्रह्वीभूता अभिमुखं स्थितस्य पत्युर्मुखं चुम्बति चेत्तद् वृत्ताधिरूढमाहुः पूर्वोक्तमालिङ्गनद्वयं स्थितं पतिमधिकृत्य प्रोक्तं नतु शायितम् । स्त्रियाः पुरुषालिङ्गनं, सपदि च शयनीये संश्लेषभेदाः शय्यायामालिङ्गनभेदाः षट् कथ्यन्ते एतानि षडालिङ्गनानि पुरुषस्य स्त्रीशरीरालिङ्गनानि ॥ ६ ॥ ७ ॥

असकृदपि विगाढाश्लेषलीलां वितन्वन्
जनितजघनबाहुव्यत्ययं स्पर्धयेव ।
मिथुनमथ मिथोऽङ्के लीयते निस्तरङ्गं
निगदति तिलपूर्वं तण्डुलं तन्मुनीन्द्रः ॥८॥

असकृदिति । असकृन्निरन्तरमतिगाढाश्लेषलीलां गाढालिङ्गनलीलां वितन्वन् कुर्वन् मिथुनं स्पर्धयेव जनितचरणबाहुव्यत्ययं यथा तथा अथ मिथः परस्परम् अङ्के निस्तरङ्गं विलीयते चेन्मुनीन्द्रस्तदालिङ्गनं तिलपूर्वं तण्डुलं निगदति तिलतण्डुलमिति वदन्तीत्यर्थः । मुनीन्द्रो गोनर्दीयः । अत्र तरङ्गशब्देन गाढमालिङ्ग्यालिङ्ग्य पुनः श्लथीकरणमित्यर्थः । निस्तरङ्गं निरन्तरगाढालिङ्गनमित्यर्थः । हस्ताभ्यामूरुभ्यां च गाढमालिङ्ग्य परस्परमङ्के विलीयते चेत्तिलतण्डुलाख्यमालिङ्गनं निगदतीत्यर्थः । एतद्दयितुरेव बोद्धव्यम् ॥ ८ ॥

अभिमुखमुपविष्टा योषिदङ्केऽथ तल्पे
रचितरुचिरगाढालिङ्गनो वल्लभश्च ।

प्रसरदसमरागावेशनश्यद्विचारौ
विशत इव मिथोऽङ्के क्षीरनीरं तदाहुः ॥९॥

अभिमुखमिति । योषिद् अङ्के तल्पे वा अभिमुखम् उपविष्टा वल्लभश्च रचितरुचिरगाढालिङ्गनः प्रसरदसमरागावेशनश्यद्विचारौ प्रसरदसमरागेण प्रवृत्तान्योन्याधिकप्रेम्णा य आवेशः संभ्रमस्तेन नश्यन् विचारो ययोस्तौ दम्पती रागावेशादन्यविचारमप्यजानन्तौ मिथोऽन्योन्यमङ्के विशत इव परस्पराङ्कं प्रविशत इव गाढालिङ्गनं कुरुतश्चेत्तत् क्षीरनीरमाहुः। एवमुक्तं भवति प्राणेश्वरीमभिमुखमङ्के तल्पे वा निवेश्य दृढमालिङ्ग्य ध्वजेन गुह्यस्पर्शं कुर्वन् दयितः, बहिरूरू नायकोत्सङ्गे विन्यस्य उपविष्टा अबला उभावेव दम्पती प्रमाणवेगार्द्रं ज्ञात्वान्योन्यशरीरान्तः प्रविष्टाविव तिष्ठतश्चेत्तदालिङ्गनं क्षीरनीरमुच्यते । एकीभावापन्नत्वात् क्षीरनीरमित्यर्थः॥ ९॥

मनसिजतरलायाः संभृतानङ्गरङ्गो
यदि पतिरबलायाः पीडयत्यूरुयुग्मम् ।
दरदलितनिजोरुद्वन्द्वसन्दंशयोगात्
तदिह मुनिमतज्ञैरुक्तमूरूपगूढम् ॥१०॥

मनसिजेति । सम्भृतानङ्गरङ्गः पतिर्मनसिजतरलाया मनसिजेन कामेन तरलायाः चञ्चलाया अबलाया अङ्गनाया ऊरुयुग्मम् ईषद्दलितनिजोरुद्वन्द्व संदंशयोगात् बलवदतीव पीडयति यत्तदालिङ्गनं मुनिमतज्ञैरूरूपगूढमुक्तं कथितम्। संदंशो नाम एकस्योपरि एकस्य निधानं, निपीडितमित्यर्थः । एवमुक्तं भवति पुमानात्मोरुमध्ये अबलाया ऊरू प्रवेश्य यद्यालिङ्गति तदूरूपगूढं कथितम्॥१०॥

जघनकलितकान्तश्रोणिरस्योपरिष्टाद्
व्रजति यदिह नारी स्रस्तकेशोत्तरीया ।
करजरदनकृत्यं चुम्बनं वा विधित्सुः
कथयति जघनोपश्लेषमेतन्मुनीन्द्रः ॥११॥

जघनेति । स्रस्तकेशोत्तरीया गलितकेशा गलितोत्तरीया च नारी अस्य कान्तस्य उपरिष्टात् जघनकलितकान्तश्रोणिः जघने कलिता धृता कान्तश्रोणिर्यया सा एतादृशी सती करजरदनकृत्यं नखदन्तक्षतकृत्यं चुम्बनं वा विधित्सुः कर्तुमिच्छुः व्रजति गच्छति चेत् तदालिङ्गनं मुनीन्द्रः जघनोपश्लेषं कथयति वदतीत्यर्थः ॥११॥

उरसि कमितुरुच्चैराविशन्ती वराङ्गी
स्तनभरमुपधत्ते यत्स्तनालिङ्गनं तत् ।
मुखमभिमुखमक्ष्णोरक्षिणी न्यस्य हन्या-
दलिकमलिकपट्टेनेति लालाटिकं स्यात् ॥१२॥

इति श्रीकोक्कोककृते रतिरहस्ये आलिङ्गनाधिकारो नाम षष्ठः परिच्छेदः ।

उरसीति । कमितुः प्रियस्य उरसि वक्षसि उच्चैः आविशन्ती प्रविशन्ती वराङ्गी यत्स्तनभरं कुचभारम् उपधत्ते तत्स्तनालिङ्गनं स्यात् । मुखमभिमुखं न्यस्य अक्ष्णोः अक्षिणी न्यस्य अलिकपट्टेन अलिकं हन्यात् तत् लालाटिकं आलिङ्गनं स्यादित्यर्थः ॥ १२ ॥

इति श्रीकाञ्चीनाथकृतायां रतिरहस्यदीपिकायाम्
आलिङ्गनाधिकारो नाम षष्ठः परिच्छेदः ॥

अथ चुम्बनान्युच्यन्ते ।

नयनगलकपोलं दन्तवासो मुखान्तः
स्तनयुगलललाटं चुम्बनस्थानमाहुः ।
दधति जघननाभीमूलकक्षासु चुम्ब-
व्यतिकरसुखमुच्चैर्देशसात्म्येन लाटाः ॥१॥

नयनेति। नयनगलकपोलं नयनगलकपोलानीत्यर्थः। प्राण्य-ङ्गत्वादेकवद्भावः। दन्तवासः अधरः, मुखान्तः मुखमध्यम्, स्तनयुगलं, ललाटम् एतत्सर्वं चुम्बनस्थानमाहुः। एतानि चुम्बनस्थानानि कथि-तानीत्यर्थः। जघनस्थलं, नाभिमूलं स्मरमन्दिरं, कक्षा बाहुमूलम् एतेषु देशसात्म्येन लाटाः चुम्बनव्यतिकरसुखं दधति। लाटदेशजा जघना-दिषु चुम्बनव्यतिकरेण सुखं कुर्वन्तीत्यर्थः॥ १॥

निमितकमिदमाहुर्योजिता यद्बलेन
प्रियमुखमभिवक्त्रं न्यस्य तिष्ठत्युदास्या।
स्फुरितमथ मुखान्तर्न्यस्तमोष्ठं जिघृक्षुः
स्फुरदधरपुटाभ्यां यन्न गृह्णाति भर्त्तुः॥२॥

निमितकमिति। सखीप्रभृतिभिर्बलेन जवेन योजिता प्रियेण सह बलाद्योजितेत्यर्थः। अबला मुग्धाङ्गना प्रियमुखस्याभिमुखं स्व-वक्त्रं विन्यस्य उदास्या ऊर्ध्वीकृतमुखा तिष्ठति चेत् निमितकाख्यं चुम्बनमाहुराचार्याः॥ मुखान्तर्न्यस्तं स्वमुखे न्यस्तं भर्त्तुरोष्ठमधरं प्रियाधरं जिघृक्षुः ग्रहीतुमिच्छुः स्फुरदधरपुटा स्यात् स्फुरन्ती च ते अधरपुटे ताभ्यां यन्न गृह्णाति ग्रहीतुं न शक्नोति तत्स्फुरितम्। स्वा-ननन्यस्तं प्रियाधरं जिघृक्षुर्या स्फुरिताधरा सती मौग्ध्याल्लज्जया वा न गृह्णाति यत्तत्स्फुरितकाख्यं चुम्बनमाहुः। अधरस्फुरणात् स्फुरि-तनामेति भावः॥ २॥

रमणरदनवासः स्वानने न्यस्तमोष्ठ-
द्वितयमृदुगृहीतं यन्मनाक् जिह्वयान्तः।
करपिहितधवाक्षी घट्टयेद् घट्टितं स्यात्।
त्रितयमपि तदेतत्कन्यकायां प्रयोज्यम्॥३॥

रमणेति। स्वानने न्यस्तं स्वमुखमध्ये निक्षिप्तं रमणस्य रदन-वासः स्वकीयेन ओष्ठद्वितयेन मृदु यथा तथा गृहीतम् अबला कर-पिहितधवाक्षी आत्मपाणितलेन च्छन्नवल्लभलोचना सती यत् मनाग् ईषज्जिह्वया अन्तर्घट्टयेत् ताडयेच्च तत् चुम्बनं घट्टितं स्यात् घट्टिता-ख्यं भवेत्। त्रितयं निमितकादि त्रिविधमपि एतच्चुम्बनम् अन्वर्थ-

नाम। निमितकं, स्फुरितकं, घट्टिताख्यमिति चुम्बनत्रितयं कन्यकायां प्रयोज्यम्। अत्र कन्याशब्देन मुग्धा नवोढा च विवक्षिता। एतच्चुम्बनत्रयं तयोरेव प्रयोज्यमिति भावः॥ ३॥

युवतिचिबुकदेशं वल्लभः पृष्ठवर्त्ती
भ्रमयति मुखमीषद्यत्कराभ्यां गृहीत्वा।
अधरमथ विलीढस्तौ मिथो भ्रान्तमेतद्
व्रजति दयितसाचीभावतस्तिर्यगाख्याम्॥४॥

युवतीति। युवतिचिबुकदेशं युवत्याश्चिबुकदेशम् "ओष्ठस्याधश्चिबुक" मिति हलायुधः। पृष्ठवर्ती पृष्ठभागे स्थितो वल्लभः युवतिचिबुकं कराभ्यां गृहीत्वा मुखम् ईषद् भ्रमयति। तौ दम्पती अधरं मिथः परस्परं विलीढः विलेहं कुरुत इति यत् एतद् भ्रान्तं नाम चुम्बनम्। एवमुक्तं भवति।कामुको दयितायाश्चिबुकं हस्ताभ्यां पर्यायेण गृहीत्वा पश्चाद्भागवर्ती सन् भ्रमयेत् तथा दक्षिणवामभागयोरन्योन्यं चुम्बनं कुरुतश्चेत् तद् भ्रान्त चुम्बनम्। दयितसाचीभावतः प्रियतिरश्चीनभावाद् एतत् तिर्यगाख्यां व्रजति॥ ४॥

द्वयमिदमवपीड्य ग्राहतः पीडिताख्यं
विघटितमथ जिह्वाग्रेण कृष्टाङ्गुलीभ्याम्।
अरदमधरमस्याः पीडयेत् प्रीतिकृष्टं
दशति कमितरि स्यादुत्तरं तूत्तरोष्ठम्॥५॥

द्वयमिति। इदं द्वयं पूर्वोक्तं चुम्बनद्वयमवपीड्य मुखं संपीड्य ग्राहतः ग्रहणात् पीडिताख्यं चुम्बनं भवति। अथाङ्गुलीभ्यां वनिताधरं कृष्ट्वाऽऽकृष्य जिह्वाग्रेणावपीड्य चुम्बति चेत्तद्विघटिताख्यं चुम्बनं भवति। अथाङ्गुलीभ्यां वनिताधरम् अरदं यथा तथा पीडयन् दन्तस्पर्शरहितं प्रीतिकृष्टमधरं जिह्वाग्रेण पीडयन् चुम्बति चेत् अरदाख्यं चुम्बनं भवति। जिह्वाग्रेण पीडनं चूषणम्। कामितरि कान्ते उत्तरोष्ठं दशति सति उत्तराख्यं चुम्बनमाहुः॥ ५॥

उभयोरपि युगपच्चुम्बनं ब्रूते

यदि पतिरबलायाः श्मश्रुहीनोऽस्य सा वा
सुमृदुरदनवासःसंपुटं सम्पुटेन।

प्रणयपरिगृहीतं चुम्बनं सम्पुटं स्या-
दनुवदनमिदं तत्केलिजिह्वारणेन ॥६॥

यदीति । यदि श्मश्रुहीनोऽजातश्मश्रुः पतिरबलाया रदनवासः-सम्पुटम् ओष्ठसम्पुटं सम्पुटेन स्वाधरसम्पुटेन प्रणयपरिगृहीतं प्रणयेन परिगृहीतमधरसम्पुटं चुम्बति।यदि सा वा अबला कान्तस्याधरसम्पुटं स्वाधरसम्पुटेन चुम्बति चेत् सम्पुटाख्यं चुम्बनं भवति। इदमेव चुम्बनं केलिजिह्वारणेन केल्या क्रीडया जिह्वारणो जिह्वाशब्दः सूत्कृत-मिति यावत्। तेनानुवदनं प्रतिवदनं चेत् स्यादनुवदनाख्यं चुम्बनं भवति ॥ ६ ॥

संपुटस्य भेदानाह

मृदु सममवपीड्याभ्यर्थितं चेति शेष-
ष्वपि कथितपदेषु प्रोक्तमन्वर्थमेतत् ॥७॥

मृद्वीति । मृदु यथा भवति तथा सममवपीड्य चुम्बति चेत् अभ्यर्थितम्। शेषेष्वपि कथितपदेषु उक्तस्थानेषु चुम्बनं चेदन्वर्थचुम्बनं प्रोक्तम्। एतदन्वर्थाख्यं चुम्बनं भवतीत्युक्तम् ॥ ७ ॥

यदि सुचिरसमेतः प्रेयसीमग्रसुप्तां
रहसि कृतकनिद्रां चुम्बति प्राणनाथः ।
कथितविधमिदं स्याच्चुम्बनं प्रातिबोधं
द्वयमिदमपरं स्याच्चुम्बनं छायिकाख्यम् ॥ ८ ॥

यदीति । सुचिरसमेतश्चिरादागतः प्राणनाथः अग्रसुप्तां कान्तां स्वागमनात् पूर्वमेव सुप्तां प्रेयसीं कृतकनिद्रां कृत्रिमनिद्रां वा रहसि चुम्बति चेत् कथितविधमुक्तप्रकारमिदं चुम्बनं प्रातिबोधं स्यात्। इदं द्वयं वक्ष्यमाणम् अपरं चुम्बनं छायिकाख्यं स्यात्। छायाचुम्बन-मित्यर्थः ॥ ८ ॥

तत्प्रकारमाह ।

अभिनवमनुरागं व्यञ्जितुं दर्पणादौ
प्रतिकृतिविषयं वा चुम्बनं पुंस्त्रियोः स्यात् ।

प्रतिकृतिशिशुचित्राश्लेषणं चुम्बनं वा
द्वयमुपहितभावं तच्च संक्रान्तमाहुः ॥ ६ ॥

इति श्रीकोक्कोककृते रतिरहस्ये चुम्बनाधिकारो नाम
सप्तमः परिच्छेदः ॥



अभिनवेति। अभिनवमनुरागं व्यञ्जितुम् अभिनवानुरागप्रकाशनार्थं दर्प्पणादौ आदर्शरत्नस्फटिकस्तम्भजलादिषु छायां दृष्ट्वा वनितायाः पुरुषस्य वा अभिनवानुरागव्यञ्जनार्थमेकं छायिकाख्यं चुम्बनं भवति। प्रतिकृतिविषयं वा शालभञ्जिकादिप्रतिकृतिं दृष्ट्वा सादृश्यदर्शनात् स्त्रियः पुरुषस्य वा प्रतिकृतिचुम्बनं भवति। प्रतिकृतिशिशुचित्राश्लेषणं चुम्बनं वा। प्रतिकृतिः प्रतिनिधिः, शिशवो बाला, श्चित्रमालेख्यम् एतेषामालिङ्गनं चुम्बनं वा उपहितभावम् आहितस्नेहं यथा स्यात्तथा भवति तद्द्वयं संक्रान्तमाहुःसंक्रान्तमिति वदन्ति। चुम्बनाधिकारेपि प्रसङ्गादालिङ्गनमुक्तम् ॥ ६ ॥

इति श्रीकाञ्चीनाथकृतायां रतिरहस्यदीपिकायां
चुम्बनाधिकारो नाम सप्तमः परिच्छेदः ॥



अथ चुम्बनेनोत्पन्नस्यानुरागस्य वृद्धये नखच्छेदनप्रकारा उच्यन्ते
तानेव स्वरूपेण दर्शयितुं प्रथमं प्रयोगसमयं
स्थानानि च कथयति।

कक्षाकरोरुजघनस्तनपार्श्वपृष्ठहृत्कन्धरासु नखराः खरवेगयोः स्युः।
अप्यन्ययोर्नवरते विरते च माने पुष्पे मदे प्रवसने विरहे प्रयोज्याः॥१॥

कक्षेति। खरवेगयोश्चण्डवेगयोःकक्षादिषु स्थानेषु नखरा नखाः स्युर्भवन्ति। कक्षे बाहुमूले, करशब्देन अंस उच्यते। करौ अंसौ इत्यर्थः। ऊरू, जघनं काञ्चीपदं, स्तनौ कुचौ, पार्श्वद्वयं, पृष्ठं तनुचरमभागः, हृत् स्तनद्वयमध्यं, कन्धरा ग्रीवेत्येतेषु चण्डवेगयोः स्त्रीपुंस-

थे नखक्षतानि भवन्तीति भावः। अन्ययोरपि मन्दमध्यवेगयोरपि नवरते नूतनसम्भोगे, माने विरते प्रणयकलहादनन्तरं सम्भोगे, पुष्पे ऋतुस्नातायां, मदे मधुपाने, प्रवसने, भविष्यति विरहे नखराः प्रयोज्याः। प्रवसनं नाम देशान्तरगमनं, विरहः केवलायोगमात्रम्॥ १॥

इदानीं नखगुणानाह।

सात्म्येन वा रदविधेरपि निर्णयोऽयं
प्रत्यग्रभूरिशिखरा अतिचण्डयोः स्युः।
वर्धिष्णुतामलिनतामृदुतोज्ज्वलत्वं
नीरेखताऽस्फुटिततेति गुणा नखानाम्॥ २॥

सात्म्येनेति। सात्म्येन देशसात्म्येन स्वभावसात्म्येन वा नखरा भवन्तीत्यर्थः। इदं पक्षान्तरं, रदविधेर्दन्तक्षतविधेरपि अयमेव निर्णयः। नखरविधेर्यो निर्णयः स एव दन्तक्षतविधेरपि निर्णयो ज्ञातव्यः। अतिचण्डयोश्चण्डवेगयोः स्त्रीपुंसयोर्नखराः प्रत्यग्रभूरिशिखराः स्युः। नखव्रणेन सद्योऽनुमिता भवन्ति। वर्द्धिष्णुता वर्द्धमानस्वभावः, अमलिनता निर्मलत्वं, मृदुता अकठिनत्वम्, उज्ज्वलत्वं दीप्तता, नीरेखता, अस्फुटितताऽच्छिन्नता इति नखानां गुणाः॥ २॥

छुरितकादेर्लक्षणं गुणोत्कर्षनिमित्तं प्रयोगस्थानं च ब्रूते।

अव्यक्तरेखमणुकर्म नखैः समस्तै-
रोमाञ्चकृच्चटचटाध्वनियोजितान्तम्।
अङ्गुष्ठजाग्रनखताडनतो नखानां
गण्डस्तनाधरगमनाच्छुरितं वदन्ति॥ ३॥

अव्यक्तेति। समस्तैः पञ्चभिर्नखैरव्यक्तरेखम् अस्पष्टरेखं यथा तथा अणुकर्म अल्पक्रियं रोमाञ्चकृत्स्पर्शं कृतपुलकं चटचटाध्वनियोजितं चटचटेतिशब्दानुकरणं तत्सहितम्। तत्कथं कुर्यादित्याह नखानामन्येषां चतुर्णां मध्ये अङ्गुष्ठजाग्रनखताडनतः अङ्गुष्ठजाग्रनखताडनात् गण्डस्तनाधरगमात् गण्डयोः स्तनयोः अधरस्य च प्राप्त्या छुरितं वदन्ति गण्डस्तनाधरं छुरितस्थानमित्यर्थः। प्राणयङ्गत्वादेकवद्भावः॥ ३॥

वक्रोर्द्धचन्द्र इति यत् स्तनकन्धराङ्क-
स्तौ संमुखौ वदति मण्डलकं मुनीन्द्रः ।
स्थानं च तस्य भगमूर्धककुन्दरोरु
द्वित्र्यङ्गुलोपरित एव लिखन्ति रेखाम् ॥ ४ ॥

वक्रोर्द्धेति । अर्द्धचन्द्रइति नखः । अत एव वक्रार्द्धचन्द्रवत्तस्य स्थानं स्तनौ, कन्धरा ग्रीवा, कण्ठश्च । एतेषु प्रयोज्यइत्यर्थः । तौ अर्द्धचन्द्रौ सम्मुखौ अभिमुखौ चेत् मुनीन्द्रः मण्डलकं वदति । तस्य स्थानं भगमूर्द्धककुन्दरोरु प्राण्यङ्गत्वादेकवद्भावः । भगस्य मूर्द्धनि उपरिभागे, ककुन्दरे जघनसमीपे "कूपकौ तु नितम्बस्थौ द्वयहीने ककुन्दरे" इत्यमरः । ऊरवो जङ्घाश्च । तत्प्रमाणं कथयति, द्वित्र्यङ्गुलोपरित एव लेखां लिखन्ति कामुकाः, द्व्यङ्गुलत्र्यङ्गुलमात्रस्योपरिष्टादेव तौ सम्मुखौ चेन्मण्डलकम् द्वौ एवार्द्धचन्द्रौ क्रोडभावेन परस्पराभिमुखौ मण्डलकमित्यर्थः ॥ ४ ॥

अङ्गुष्ठजं नखमधो विनिवेश्य कृष्टैः
सर्वाङ्गुलीकररुहैरुपरि स्तनस्य ।
यच्चूचुकाभिमुखमेत्य भवन्ति रेखा-
स्तज्ज्ञा मयूरपदकं तदुदाहरन्ति ॥ ५ ॥

अङ्गुष्ठेति । स्तनस्योपरि अङ्गुष्ठजं नखमधो निवेश्य सर्वाङ्गुलीकररुहैरन्यैश्चतुर्भिर्नखैः कृष्ट्वा विलिख्य चूचुकाभिमुखमेत्य गत्वा रेखा भवन्ति यत्र तज्ज्ञाः कामकलावेदिनस्तन्मयूरपदकमुदाहरन्ति तदाकारत्वात् तन्नखपदं मयूरपदकमाहुः ॥ ५ ॥

सर्वैः शशप्लुतमिदं करजैः कुचाग्रे ह्यन्वर्थमुत्पलदलं स्तनगुह्यपृष्ठे ।
रेखा घनास्त्रिचतुरा जघने स्तने वा स्मर्त्तुं प्रवासगमने विदधुर्विदग्धाः॥६॥

इति श्रीकोक्कोककृते रतिरहस्ये नखाधिकारो
नामाष्टमः परिच्छेदः ॥

सर्वैरिति । सर्वैः करजैः पञ्चभिर्नखैः कुचाग्रे शशप्लुतवन्नखपदं शशप्लुतमुच्यते । स्तनगुह्यपृष्ठे स्तनयोर्गुह्ये पृष्ठे च उत्पलदलाख्यं

नखपदमन्वर्थनाम । प्रवासगमने देशान्तरगमनकाले स्मर्तु प्रियजनस्मरणार्थं विदग्धा निपुणा घनास्त्रिचतुरास्तिस्रश्चतस्रो वा रेखाः स्तने जघने वा विदधुः विदग्धाः प्रवासकाले जघनस्थले स्तनयोर्वा स्मरणार्थं तिस्रश्चतस्रो वा रेखाः कुर्वन्तीत्यर्थः ॥ ६ ॥

इति श्रीकाञ्चीनाथकृतायां रतिरहस्यदीपिकायां
नखाधिकारो नामाष्टमः परिच्छेदः ॥

---o---

स्निग्धत्विषः शितशिखानतिदीर्घखर्वा
रागस्पृशः समघना दशनाः प्रशस्ताः ।
अन्तर्मुखोत्तररदच्छदनेत्रवर्ज्जं
स्थानेषु चुम्बनविधिः कथितेषु योज्यः ॥ १ ॥

स्निग्धेति । स्निग्धत्विषः स्निग्धकान्तयः, सितशिखा निशिताग्राः, अनतिदीर्घखर्वाः अतिदीर्घा अतिखर्वाश्च न भवन्ति, रागस्पृशः सहजरागवन्तः, समघनाः समोन्नतयः, घना निरन्तराश्च एवंविधा दशनाः प्रशस्ताः, दन्तेष्विति शेषः । ते दशना अन्तर्मुखोत्तररदच्छदनेत्रवर्ज्जं, मुखमध्यम्, उत्तरोष्ठं, नेत्रे च एतानि वर्जयित्वा चुम्बनविधिः कथितेषु स्थानेषु योज्यः ॥ १ ॥

रागैकलिङ्गमधरे किल गूढकं स्या-
दुच्छूनकं दशनवाससि वामगण्डे ।
स्यात्पीडनात्तदधरोष्ठविशेषयोगा
त्तत्र प्रवालमणिरभ्यसनेन साध्यः ॥ २ ॥

रागैकलिङ्गमिति । अधरे रागैकलिङ्गं रागमात्रलाञ्छनम् "एके मुख्यान्यकेवलाः" इत्यमरः । गूढकं नाम दशनपदं स्यात् । दशनवाससि वामगण्डे च पीडनात् उच्छूनकाख्यं भवति । दशनवाससि अधरे, वामगण्डे वामकपोले, पीडनात् उच्छूनकं स्यात् उच्छूनकाख्यं दशनपदं भवतीत्यर्थः । अधरोष्ठविशेषयोगात्तत्र गण्डे अभ्य-

सनेन प्रवालमणिः साध्यः । प्रवालमणिर्नाम दशनः अभ्याससाध्य इति यावत् ॥ २ ॥

मध्येऽधरं तिलश एव विखण्डने स्याद्
बिन्दू रदद्वयकृते सकलैः कृते तु ।
स्यातां शिताग्रदशनैर्मणिबिन्दुमाले
कक्षाललाटगलवङ्क्षणभूषणे ते ॥ ३ ॥

मध्येऽधरमिति । मध्येधरमधरमध्ये "पारेमध्ये षष्ठ्यावे" ति षष्ठीसमासः । तस्मिन् तिलश एव तिलप्रमाणेन खण्डने सति रदद्वयकृतो दन्तद्वयनिर्मितो बिन्दुरिति स्यात् । सकलैरदैः कृते तु तथा न भवति । सकलैः सिताग्रदशनैः कृते मणिबिन्दुमाले स्यातां भवतः। तयोः स्थानमाह । ते मणिबिन्दुमाले कक्षाललाटगलवङ्क्षणभूषणे । वङ्क्षणं जघनसन्धिरुच्यते । "सक्थि क्लीबे पुमानूरुस्तत्सन्धिः पुंसि वङ्क्षण" इत्यमरः । एतेषां स्थानानां भूषणे ते, एतेषु ते प्रयोज्ये इति यावत् ॥ ३ ॥

खण्डाभ्रकं स्तनतटे दशनाग्रलेख्यं
स्यान्मण्डलाकृतियुतं विषमैश्च कूटैः ।
ताम्रान्तरा रदनराजिरखर्वसान्द्रा
स्यात्कोलचर्वितमियं स्तनपृष्ठभूषा ॥ ४ ॥

इति श्रीकोक्कोककृते रतिरहस्ये बाह्यरताधिकारो नाम
नवमः परिच्छेदः ॥



खण्डाभ्रकमिति । स्तनतटे स्तनपार्श्वे दशनाग्रलेख्यं मण्डलाकृतियुतं मण्डलाकारं विषमैर्निम्नोन्नतैः कूटैः शृङ्गैः शिखरैरिति यावत्।उपलक्षितं खण्डाभ्रकं स्यात् खण्डाभ्रकनामधेयं स्यात्।खण्डाभ्रतुल्यत्वात् खण्डाभ्रकम्।ताम्रान्तरा ताम्रमध्या,अखर्वसान्द्रा अखर्वा च सान्द्रा च दशनराजिर्दन्तपङ्क्तिः स्तनपृष्ठभूषा स्तनयोः पृष्ठस्य च भूषा मण्डना सा दशनपङ्क्तिः कोलचर्वितं स्यात् कोलचर्विताख्यं दशनपदं

भवन्ति। कोलो वराहः, तच्चर्विततुल्यत्वात् इदमन्वर्थं वराहचर्वणम्। अस्मिन् बाह्यरताधिकारपरिच्छेदे द्वादशाऽऽलिङ्गनानि, सप्तदश चुम्बनानि, सप्त नखभेदाः, अष्टौ दशनकर्म्माणि कथितानि ॥ ४ ॥

इति श्रीकाञ्चीनाथकृतायां रतिरहस्यदीपिकायां
बाह्यरताधिकारो नाम नवमः परिच्छेदः ॥



इतः परम् आन्तररतं क्रमप्राप्तं वक्तुं सुरतगोष्ठीयोग्यं गृहमुच्यते।

विलसदमलदीपे पुष्पदामावकीर्णे
प्रसृतसुरभिधूपे धाम्नि कामी सुवेषः।
सह सहचरवर्गैर्वामपार्श्वे निवेश्य
स्त्रियमुपहितभूषां भावयेन्नर्मगोष्ठीम् ॥ १ ॥

विलसदिति। विलसदमलदीपे, पुष्पमालावकीर्णे पुष्पमालाव्याप्ते, प्रसृतसुरभिधूपे सुगन्धिधूपप्रसारयुक्ते, धाम्नि गृहे सुवेषो वस्त्रालङ्काराङ्गरागपुष्पादिभिरलङ्कृतकारः कामुकःकामी सहचरवर्गैः पीठमर्दविटविदूषकादिभिस्सह उपहितभूषामाहितमण्डनां स्त्रियं प्राणसमां वामपार्श्वे निवेश्य नर्मगोष्ठीं क्रीडागोष्ठीं भावयेत् कुर्यात्। सहचरवर्गैः विदूषकादिभिः सह यां कांचिन्नर्मगोष्ठीं कुर्यादित्यर्थः॥१॥

कृतलघुपरिरम्भो वामदोष्णा पटान्ता-
ञ्चलकुचयुगकाञ्चीः संस्पृशेद्भूय एव।
कलितललितगाथागीतिरुत्पाद्य चैवं
युवतिहृदयरागं, भग्नगोष्ठीप्रबन्धः ॥ २ ॥

कृतेति। अथानन्तरं नर्मगोष्ठीविभावनानन्तरमिति यावत्। वामदोष्णा वामभुजेन कृतलघुपरिरम्भः कृतमृद्वालिङ्गनो भूय एव वस्त्राञ्चलकुचयुगकाञ्चीः संस्पृशेत्। चेलाञ्चलं कुचौ काञ्ची मेखलां च स्पृशेत्। वामपार्श्वस्थां वामभुजेनालिङ्ग्य अनन्तरं वस्त्राञ्चल-

माकर्षयेदित्यर्थः । कलितललितगाथागीतिः अनन्तरं कृतशुभगाथागीतिः मन्मथोद्दीपनेतिहासादिकारीत्यर्थः । एवम् आलिङ्गनेन वस्त्राञ्चलादिस्पर्शेन गाथागानेन च युवतिहृदयरागमुत्पाद्य युवतिहृदि अनुरागमुत्पाद्य भग्नगोष्ठीप्रबन्धः अनन्तरं त्यक्तगोष्ठीप्रबन्धो भवेत् । पीठमर्द्दादीन् विसर्जयेदित्यर्थः ॥ २ ॥

अलिकचिबुकगण्डं नासिकाग्रं च चुम्बन्
पुनरुपहितसीत्कं तालु जिह्वां च भूयः ।
छुरितलिखितनाभीमूलवक्षोरुहोरुः
श्लथयति धृतधैर्यः स्वापयित्वाऽथ नीवीम् ॥३॥

अलिकेति । अलिक, चिम्बुक, गण्डं, ललाटचिबुककपोलानित्यर्थः । नासिकाग्रं च चुम्बन्, पुनरुपहितसीत्कृतं तालु जिह्वां च चुम्बन्, छुरिताख्येन नखपदेन लिखितनाभिमूलवक्षोरुहोरुः नाभिमूलं जघनं, वक्षोरुहौ कुचौ, ऊरू प्रसिद्धौ एतेषु छुरिताख्यं नखपदं कृत्वा स्वयं धृतधैर्यः सन् स्वापयित्वा कान्तामिति शेषः । नीवीं श्लथयति परिधानांशुकग्रन्थिं शिथिलयतीति भावः ॥ ३ ॥

यदि कामी सुरतपराङ्मुखीमुपगच्छेत्तर्हि किं कुर्यादित्याह

यदि विमतिमुपेयाद् गण्डपालीं विचुम्ब्य
स्मरगृहमपि लिङ्गाग्रेण सम्पीड्य, दत्त्वा ।
मुखमभिमुखमस्या अङ्गमालिङ्ग्य दोर्भ्यां
मदनसदनहस्तक्षोभलीलां विदध्यात् ॥ ४ ॥

यदीति । विमतिं सुरतविमुखामङ्गनाम् उपेयात्तर्हि गण्डपालीं विचुम्ब्य गण्डस्थलचुम्बनं कुर्वन् स्मरगृहं गुह्यमपि लिङ्गाग्रेण ध्वजाग्रेण सम्पीड्य पीडयित्वा मुखम् आत्ममुखम् अस्या अङ्गनाया अभिमुखं सम्मुखं दत्त्वा अङ्गं दोर्भ्यामालिङ्ग्य मदनसदनहस्तक्षोभलीलां विदध्यात् मदनसदनं गुह्यं तत्र हस्तक्षोभलीलां कुर्यात् गुह्ये हस्तेन अङ्गुलिप्रवेशनेन डोलनं र्यादित्यर्थः ॥ ४ ॥

सरसिजमृदुरन्तः कोपि कीर्णाङ्गुलीभि-
भवति च वलितोन्यः कोपि गोजिह्विकाभः।
इति मदननिवासो योषितां स्याच्चतुर्धा
व्रजति शिथिलतां च श्लाघ्यतां पूर्वपूर्वः॥ ५॥

सरसिजेति। एकः सरसिजदलवन्मृदुः, एकोऽङ्गुलीभिः कीर्णः सर्वाङ्गुलीसमबन्धनभावः, अन्यो वलितः सञ्जातवलिः, कोपि गोजिह्विकाभः एको गोजिह्विकासदृश इति योषितां मदननिवासो भगश्चतुर्द्धा स्यात् पूर्वः पूर्वः शिथिलतां सद्रवतां श्लाघ्यतां च वहति एषु यो यः पूर्वः स एव शिथिलः श्लाघ्यश्च॥ ५॥

निवसति भगमध्ये नाडिका लिङ्गतुल्या
मदनगमनदोला द्व्यङ्गुलक्षोभिता सा।
सृजति मदजलौघं सा च कामातपत्रं
द्वयमिह युवतीनामिन्द्रियं निर्दिशन्ति॥ ६॥

निवसतीति। भगमध्ये योनिमध्ये लिङ्गतुल्या लिङ्गाकारा नाडिका निवसति मदनगमन दोला काम गमनदोलेत्यर्थः। सा द्व्यङ्गुलक्षोभिता अङ्गुलिद्वयेन क्षोभिता मदनजलौघं मदनजलप्रवाहं सृजति सा मदनगमनदोला वक्ष्यमाणं, कामातपत्रञ्च एतद् द्वयं युवतीनामिन्द्रियं निर्दिशन्ति अथवा मदनगमनदोलेत्यत्र एके मदनशब्देन मेहनं विवक्षितमिति कथयन्ति॥ ६॥

मदनसदनरन्ध्रादूर्ध्वतो नासिकाभं
सकलमदशिराढ्यं मन्मथच्छत्रमाहुः।
वसति मदनरन्ध्रस्यान्तरे नातिदूरात्
स्मरजलपरिपूर्णा पूर्णचन्द्रेति नाडी॥ ७॥

मदनेति। मदनसदनरन्ध्रादूर्ध्वतो भगरन्ध्रादूर्ध्वभागे नासिकाभं नासिकासदृशं सकलमदशिराढ्यं सकलमदशिरासहितं मन्म-

थच्छत्रमाहुः, मदनसदनरन्ध्रस्यान्तरे नातिदूरात्समीपे स्मरजलपरिपूर्णा पूर्णचन्द्रेति नाडी वसति ॥ ७ ॥

निवसति बहुनाडीचक्रमन्यत्प्रधानं
त्रितयमिदमिहोक्तं हस्तशाखाविमर्दे ।
करिकरफणिभोगार्द्धेन्दुकामाङ्कुशाद्यै-
रलमिह करशाखायोगभेदाभिधानैः ॥ ८ ॥

निवसतीति । अन्यद्बहुनाडीचक्रं निवसति, इह हस्तशाखाविमर्दे अङ्गुलिविमर्द्दने इदं त्रितयं प्रधानमुक्तम् । त्रितयञ्च मदनदोला, मन्मथच्छत्रम्, पूर्णचन्द्रेति ॥ ८ ॥

शिथिलयति कठोरां तर्जनीमध्यमाभ्या-
मसकृदुदितनाडीं क्षोभयित्वा यथेष्टम् ।
इति नखरदचुम्बाश्लेषगुह्योपचारै-
र्विलसति मदराज्ये यन्त्रयोगं विदध्यात् ॥ ९ ॥

शिथिलयतीति । तर्जनीमध्यमाभ्यामसकृदुदितनाडीं यथेष्टं क्षोभयित्वा कठोरां कठिनहृदयां स्त्रियं क्षोभयति शिथिलयति तर्जनीमध्यमाभ्यामङ्गुलीभ्यामेव क्षोभयित्वा शिथिलयति, इति अनेन प्रकारेण नखदन्तचुम्बनालिङ्गनकरिक्रीडादिभिर्मदनराज्ये विलसति सति उद्रिक्तमदातिशयां कान्तां ज्ञात्वेत्यर्थः । यन्त्रयोगं सुरतसम्बन्धं विदध्यात् ॥ ९ ॥

अथ सात्म्यवशात्कृतबाह्यरतः परतः प्रमदां कलयेत्समदाम् ।
स्मरमन्दिरमानसमानगतिःस्मरयन्त्रविधिं विदधीत पतिः ॥१०॥

अथेति । अथानन्तरं सात्म्यवशात् कृतबाह्यरतः सात्म्यानुरूपं कृतालिङ्गनादिः, सात्म्यं देशसात्म्यं स्वभावजं वा, परतः पश्चात् प्रमदां समदां रतोन्मुखां कलयन् जानन् स्मरमन्दिरमानसमानगतिर्योनिप्रमाणानुरूपध्वजगतिः पतिः कान्तः स्मरयन्त्रविधिं विदधीत करणानि कुर्वीत ॥ १० ॥

एवंविधस्य यन्त्रणा कथमित्याकाङ्क्षायामाह

शिथिलस्मररन्ध्रघनीकरणं यदि संयमितोरु भवेत्करणम् ।
सुघने जघने शिथिलीकरणं विवृतोरुकमेव मतं करणम् ॥११॥

शिथिलेति । करणं संयमितोरु यदि भवेत् तदा शिथिलस्मररन्ध्रघनीकरणं शिथिलस्य विशालस्य स्मररन्ध्रस्य योनेर्घनीकरणम् । करणं संश्लिष्टोरुकं भवति चेत् स्मररन्ध्रं घनं संवृतं भवेदित्यर्थः । जघने घने च सति । घनत्वं नाम संवृतत्वम् । सम्बाधे संवृत इत्यर्थः । शिथिलीकरणोपायः कथमिति चेत् तदा करणं विवृतोरुकं विश्लिष्टोरुकं भवति । एतदेव उत्तरश्लोके स्पष्टीकरोति ॥ ११ ॥

इह नीचरते घटयत्यघनं जघनं प्रमदातिमदाकुलिता ।
ध्रुवमुच्चरते प्रविशालयति प्रगुणं सममेव समे स्वपिति ॥ १२ ॥

इहेति । इहास्मिन् यन्त्रयोगे नीचरते प्रमदा हस्तिनी अतिमदाकुलिता सती अघनं विशालं जघनं घटयति संवृतं करोति, उच्चरते जघनं मृगी प्रविशालयति, समरते सममेव स्वपिति शेते । अन्यत्राप्येवमुक्तम् ।

विवृतोरुकमुच्चैस्तु नीचैः स्यात्संवृतोरुकम् ।
यथा स्थितोरुकं चैव समपृष्ठं समे रते ॥
इति ॥ १२ ॥

उत्तानकतिर्यगथासितकं स्थितमानतमित्यपि पञ्चविधम् ।
सुरतं गदितं मुनिना क्रमशः कथयामि विशेषमशेषमतः ॥१३॥

उत्तानकेति । उत्तानकं तिर्यगासितकं स्थितम् आनतमिति सुरतं मुनिना वात्स्यायनेन पञ्चविधङ्गदितं पञ्चप्रकारमुक्तम् । अतो विशेषमशेषं कथयामि । वात्स्यायनेनोक्तं पञ्चविधं सुरतं सविस्तारं वक्ष्यमाणप्रकारेण कथयामीति भावः ॥ १३ ॥

उत्तानरतप्रचये करणद्वयमत्र समे, त्रयमुच्चरते ।
क्रमतोथ चतुष्टयमल्परते गदितं मुनिनाथ विना नियतेः ॥१४॥

उत्तानरतेति । अत्रोत्तानरतप्रचये अत्रास्मिन् उत्तानरतसमूहे समे समरते करणद्वयं प्रयुञ्जीत । ग्राम्यं, नागरकं च प्रयुञ्जीत। उच्चरते त्रयम् । उत्फुल्लकं, जृम्भितकम्, इन्द्राणिकञ्चेति । अल्परते नीचरते क्रमत उत्तरक्रमेण चतुष्टयं प्रयुञ्जीत । सम्पुटकं, पीडितकं, वेष्टितं, बाडवकमिति करणचतुष्टयं प्रयुञ्जीत । अथ मुनिना वात्स्यायनेन नियतेर्विना कथितं नियमेन विनोक्तमित्यर्थः । तिर्यगासितकादिषूक्तवैचित्र्यमेव फलं समरतादिविशेषो न कथित इति भावः ॥१४॥

अथ नागरकादिलक्षणमुच्यते ।

उत्तानितयोषित एव भवेदुपविष्टनरोरुगमूरुयुगम् ।
तद्ग्राम्यमथास्य बहिः कटितो यदि याति तदा किल नागरकम् १५

उत्तानितेति । उत्तानायाः योषित ऊरुयुगमूरुद्वन्द्वम् उपविष्टनरोरुगम् उपविष्टस्य नायकस्य ऊर्वोरुपरि स्थितं चेत्तत्करणं ग्राम्यमाहुः अथ अस्य कान्तस्य कटितस्त्रिकस्थानाद्बहिर्योषित ऊरुयुगं याति चेत्तदा नागरकं करणमुच्यते ॥ १५ ॥

करयुग्मधृतत्रिकमूर्ध्वलसज्जघनं पतिहस्तनिविष्टकुचम् ।
स्फिग्बिम्बबहिर्धृतपार्ष्णियुगं ह्युत्फुल्लकमुक्तमिदं करणम् ॥१६॥

करयुग्मेति । करयुग्मधृतत्रिकं करयुग्मेन धृतत्रिकम् अत एवोर्ध्वलसज्जघनम् ऊर्ध्वीकृतजघनं पतिहस्तनिविष्टकुचं कान्तस्य हस्ताभ्यां निविष्टौ मर्दितौ कुचौ यथा तथा पुरुषस्य स्फिग्बिम्बस्य नितम्बमण्डलस्य बहिर्धृतस्त्रीपार्ष्णियुगं यथा तथा करणं चेदुत्फुल्लकाख्यम्। एवमुक्तं भवति । नायिकायां स्वकरयुग्मेन आत्मनः त्रिकं गृहीत्वा ऊर्ध्वीकृतजघनं यथा तथा उत्तानायां सत्यां पुरुषे हस्ताभ्यां स्तनौ गृहीत्वा रममाणे सति तदा स्त्रियां पुनरात्मपार्ष्णियुगं पुरुषनितम्बबिम्बाद् बहिष्कृत्वा शयितायामिदं करणमुत्फुल्लकम् । एतल्लक्षणं वात्स्यायनेनापि " शिरो निपात्य ऊर्ध्वं जघनं कुर्यात्तदुत्फुल्लकमिदं करण" मिति प्रोक्तम् ॥ १६ ॥

यदि तिर्यगुदञ्चितमूरुयुगं दधती रमते रमणी रमणम्।
विहितापसृतिर्विवृतोरुभगा भुवि जृम्भितमुक्तमिदं करणम् ॥१७॥

यदीति। रमणी योषित्तिर्यगुदञ्चितमूर्ध्वीकृतमूरुयुगं दधती रमणं कान्तं रमते यदि रमतेरकर्मकत्वादन्तर्भावितण्यर्थोयं प्रयोगः। विहितापसृतिः कृतापसारा,अत एव विवृतोरुभगा विस्तृतबृहद्भगा इदं करणं भुवि जृम्भितमुक्तम्। रमणी स्वकीयमूरुयुग्मं तिर्यक्प्रसार्य रतिं लभते चेद्विजृम्भितकमिति वात्स्यायनश्च। एवमुक्तं भवति,योषिद् ऊरू तिर्यगूर्ध्वीकृत्य पार्श्वयोर्भ्रामयन्ती पुरुषं रमते चेज्जृम्भितकम्। उत्फुल्लकजृम्भितकयोः स्त्रिया रौद्रभावेन क्रोधः ॥ १७ ॥

निजमूरुयुगं सममादधती प्रियजानुनि योजयति प्रमदा।
यदि पार्श्वत एव चिराभ्यसनादिन्द्राणिकमुक्तमिदं करणम् ॥१८॥

निजमिति। प्रमदा निजमात्मीयमूरुयुगं सममादधती प्रियजानुनि योजयति चेदेकस्मिन् प्रियजानुनि ऊरुद्वयं योजयति यदि पार्श्वत एव चिराभ्यसनादिदं करणमिन्द्राणिकमुक्तम्। वात्स्यायनोक्तप्रकारश्चोच्यते, "पार्श्वयोः सममूरू विन्यस्य पार्श्वयोर्जानुनी निदध्यात् इत्यभ्यासयोगाच्च इन्द्राणिक"मिति। अन्यच्च लक्षणम् ॥

संश्लिष्टजङ्घे नार्यूरू यथाकालं स्वपार्श्वयोः।
कृत्वाभ्यासेन चेन्द्राणी कक्षावस्थितजानुनी ॥

इति ॥ १८ ॥

संपुटकयुक्तिमाह

सरलीकृतजंघमुभौ मिलितौ यदि सम्पुटको भवति द्विविधः।
उत्तानकपार्श्ववशाद् युवतेः स च पीडितमूरुनिपीडनतः ॥१९॥

सरलीति। उभौ पादौ प्रसार्य्य आलिङ्ग्य सरलीकृतजङ्घं प्रसारितजङ्घं यथा तथा मिलितौ चेत्सम्पुटकाख्यं करणं भवति। तथा च वात्स्यायनः"सच द्विविधः,पार्श्वसम्पुटक;उत्तानकसम्पुटकश्च। तथा कर्मयोगात्। पार्श्वतः शयानो युवा दक्षिणेन नारीमधिशयीतेति"। अयं युवतेरुत्तानवशात् पार्श्ववशाच्च द्विविधः। युवत्या उत्तानवशात्

उत्तानसम्पुटकः, पार्श्ववशात् पार्श्वसम्पुटकः। सच सम्पुटकः ऊरु-निपीडनत ऊरुभ्यां पीडनेन पीडिताख्यं करणं भवति ॥ १९ ॥

परिवर्तितमूरुयुगे तु भवेदिदमेव हि वेष्टितनामधरम् ।
गृह्णाति भगोष्ठपुटेन यदि ध्वजमस्फुरमित्यपि वाडवकम् ॥२०॥

परिवर्तितमिति। स्त्रिया ऊरुयुगे परिवर्तित इदमेव निपीडित-मेव वेष्टितनामधरं वेष्टिताख्यं भवति। "ऊरू व्यत्यस्येदिति वेष्टितक" मिति वात्स्यायनः। अन्ये पुनराहुः,परिवर्तनं नाम ऊर्वोर्विवृतसंवृतत्वे, रते ऊर्वोः कदाचिद्विवृतत्वं कदाचित्संवृतत्वं यदि संजातं तदा वेष्टितं नाम करणं भवति, एवं वा, स्त्रियामात्मपदाभ्यां पुरुषपार्श्वप्रविष्टाभ्यां पृष्ठभागमावेष्ट्य शयितायां पुरुषः प्रह्वीभूयाऽऽलिङ्ग्य रमते चेद्वेष्टि-ताख्यं करणं भवति, नायिका भगोष्ठपुटेन योनिपार्श्वाभ्यां ध्वजमस्फुरं यथा तथा गृह्णाति यदि तदा वाडवकं करणम्। अस्फुरमचेष्टं रता-वुक्रम्। एवमुक्तं भवति, ध्वजे मन्दवीर्यत्वादस्फुरे सति अनेन करणेन योषित् ध्वजस्फुरणम् अनुभवति। अथ वा निश्चेष्टे ध्वजे सति योषिद् रतौ भगेनोष्ठपुटेनापि गृह्णाति तदा ध्वजस्तुरगमेहनसदृशो भवति एतद्वाडवकं करणम्।चरणावूर्ध्वं नायको यस्या धारयेदिति जृम्भितकं, कुञ्चितौ पादौ धारयेच्चेत् पीडितकम्, ऊरू व्यत्यस्येदिति वेष्टितकं, वडवेव निष्ठुरमवगृह्णीयादिति वाडवकं,माभ्यासिकं तदान्ध्रीषु प्रायेण इति बाभ्रवीयाः संवेशनप्रकाराः ॥ २० ॥

यदि संहतमूर्ध्वगमूरुयुगं युवतीं परिरभ्य रमेत नरः ।
तदुद्भुग्नमुरःस्फुटनं तु भवेदुरसि प्रमदाचरणद्वयतः ॥२१॥

यदिसंहतमिति। युवतेः संहतं संश्लिष्टम् ऊर्ध्वगतम् ऊरुयुगं भुजाभ्यां परिरभ्य यदि नरो रमते तद् उद्भुग्नं करणं भवति। तदेवं करणं पुरुषोपरि प्रमदाचरणद्वयतः उरःस्फुटनं नाम।एवमुक्तं भवति, उत्तानायां योषित्यात्मचरणावूर्ध्वीकृतौ पुरुषोरसि संगतयोश्चरणयो-स्तलं निधाय शयितायां पुरुषोपि तदेव चरणद्वयं कराभ्यां गृहीत्वा रमते चेदुरःस्फुटनं भवेत् ॥ २१ ॥

अङ्गार्द्धनिपीडतमेकपदप्रसृतावथ जानुयुगं युवतेः ।
स्कन्धे यदि जृम्भकमेकमधः प्रसृतं यदि सारितमुक्तमिदम् ॥२२॥

अङ्गार्द्धेति। अङ्गार्द्धनिपीडितं करणं भवति, एकपदस्य प्रसृतौ सत्यां नायिका एकं पदं नायिकोरसि प्रसार्य शेते चेदङ्गार्द्धनिपीडितं करणं भवतीत्यर्थः। अथ युवतेर्जानुयुग्मं पुरुषस्कन्धे यदि निहितं योषिद् आत्मजानुनी पुरुषस्कन्धे कृतवती चेज्जृम्भकं करणं भवति। एकमधः प्रसृतम् एकं पदमधः प्रसार्य इत्यर्थः। अपरं पुरुषस्य स्कन्धे नायिका करोति चेदिदं करणं सारितम्। नायिकाया अंसौ, कण्ठः, कुचौ, पार्श्वे नितम्बः ऊरू च यदालम्बनयोग्यं भवति तदेव गृहीत्वा रमणेन रतिः कार्येत्युपदेशः। इदमेव करणेषु पुरुषस्यावलम्बनम्॥ २२॥

परिवर्तनतो बहुशः प्रथितं कथितं भुवि वेणुविदारितकम्।
जंघाग्रमधो यदथोर्ध्वगतं शिरसो युवतेर्यदि शूलचितम्॥२३॥

परिवर्त्तनतइति। तदिदं करणमेव बहुशः परिवर्त्तनतः स्कन्धस्थितमधः कृत्वा अधःस्थितं स्कन्धे कृत्वा पुनः पुनरेवं जानुपरिवर्त्तनाद्वेणुविदारितकं भवति। युवतेर्जङ्घाग्रमेकं पुरुषस्य शिरस उपरिगतम् एकं जङ्घाग्रमधः स्थितं यदि तदा शूलाचितं करणं भवति॥२३॥

यदि कुञ्चितपादयुगं युवतेर्नरनाभिमुदञ्चति मार्कटकम्।
प्रेङ्खा भवति प्रसभं युवतिः प्रमदा स्वपदा यदि तं च तदा॥२४॥

यदिकुञ्चितेति। युवतेः कुञ्चितं पादयुगं नरनाभिमुदञ्चति नरनाभिप्रदेशेन सहितं चेन्मार्कटकं करणं भवति। युवतिः प्रमदा स्वपदा स्वपादेन प्रसभं भ्रमति चेत्तदा तत्करणं प्रेङ्खाख्यं भवति प्रमदा स्वपदावूर्ध्वीकृतौ तोरणाकारौ कृतौ प्रेङ्खोलयति चेत् प्रेङ्खाभं सत् प्रेङ्खाख्यं करणं भवतीत्यर्थः॥ २४॥

जङ्घायुगलस्य विपर्ययतः पद्मासनमुक्तमिदं युवतेः।
जङ्घैकविपर्ययतस्तु भवेदिदमेव तदर्द्धपदोपपदम्॥२५॥

जङ्घेति। युवतेर्जङ्घयोर्युगलस्य विपर्ययतो वैपरीत्यात् वामजङ्घां दक्षिणजङ्घोपरि विन्यस्य, एवमन्योन्यविपर्यासेनेत्यर्थः। इदं करणं पद्मासनमुक्तम्। एकां जङ्घामूर्ध्वं प्रसार्य उपरि इतरं निधाय रमते चेदिदमर्द्धपद्मासनं करणं भवति॥ २५॥

निजजानुयुगान्तरनिर्गमितौ स्वभुजौ पतिकण्ठमसौ नयते ।
रमणी रमणोऽपि तमेव भुजद्वितयेन च बन्धुरितं कुरुते ।
तत्कूर्परमध्यगतेन तदा फणिपाशमिदं मुनयो जगदुः ॥२६॥

निजजान्विति । निजजानुयुगान्तरनिर्गमितौ आत्मजान्वोर्मध्ये निर्गमितौ स्वभुजौ असौ रमणी पतिकण्ठं नयते ऊर्ध्वं जानुयुग्मान्तरनिर्गमिताभ्यां स्वभुजाभ्यां रमणी पतिकण्ठं गृह्णाति, रमणोऽपि कूर्परमध्यगतेन स्वभुजद्वितयेन एवमेव बन्धं बन्धुरितं दृढं करोति चेदिदं करणं मुनयः फणिपाशं जगदुर्निगदन्ति स्म । कफोणिः [ कुहनिः ] कूर्परे स्मृतः ॥ २६ ॥

अङ्गुष्ठसमर्पितपाणिभृतो जंघायुगलं युवतेः पुरुषः ।
निजकूर्परयोर्निदधाति भुजौ तत्कण्ठ इदङ्किल संयमनम् ॥२७॥

अङ्गुष्ठेति । अङ्गुष्ठसमर्पितपाणिं भृतो बिभ्राणाया युवतेर्जङ्घायुगलं पुरुषः निजकूर्परयोर्निदधाति स्वभुजौ तत् कण्ठे निदधाति इदं संयमनं नाम करणम् । नायिकायां स्वहस्ताङ्गुलीभिरात्मनः पादाङ्गुष्ठमूर्द्ध्वीकृतं गृहीत्वा उत्तानायां कान्तस्तस्य जान्वोरधः प्रवेशिताभ्यामात्मनो भुजाभ्यां तत्कण्ठं गृहीत्वा रमते चेत्तदा संयमनं करणं भवति ॥ २७ ॥

भुजयोर्भुजमाननमाननतो जंघामभिजंघमसौ रमते ।
विन्यस्य नरो यदि कौर्ममिदं परिवर्तितमूर्द्ध्वगतोरुयुगम् ।
यदि पीडितमूरुयुगं तु भवेद्वनितोरुनरांघ्रिनिपीडनतः ॥२८॥

भुजयोरिति । भुजयोर्भुजम् आननतः आनने आननं वदनम्, अभिजङ्घं जङ्घायां जंघं विन्यस्य योषितः एषु स्थानेषु आत्मनः अमूनि विन्यस्य रमते चेत्कौर्म्मं करणं भवति, कान्ते तथैव च रममाणे ऊर्द्ध्वगतोरुयुगं चेत् ऊर्ध्वगतमूरुयुगं यस्मिन् करणे तदूर्ध्वगतोरुयुगम् । ऊर्वोरूर्ध्वगमनात्कदाचित्संवृतत्वं विवृतत्वं च कुर्वत्यां नायिकायां परिवर्तितं नाम करणम् ॥ वनितोरुनराङ्घ्रिनिपीडनतः वनिताया

ऊरुभ्यां नखाभ्यामङ्घ्रिनिपीडनात् नरस्य ऊरुयुगं यदि पीडितमुत्तानां कर्तुमशक्तश्चेत्पीडिताख्यमेव करणं भवति ॥ २८ ॥

उत्तानरतानि गतानि वदाम्यथ तिर्यगहं सुरताद्वितयम् ।
मध्येवनितोरु नरोरुगतौ कथितो मुनिभिस्तु समुद्र इति ॥२९॥

उत्तानरतानीति । एवमुक्तप्रकारेण उत्तानरतानि षड्विंशतिप्रकाराणि गतानि । अथ तिर्यगाख्यंसुरताद्वैतयं वदामि । मध्येवनितोरु कान्ताया ऊरुमध्ये नरोरुगतौ नरस्य ऊरुगमने सति मुनिभिर्गोणिकापुत्रादिभिः समुद्र इति गदितम् । तिर्यक् संमुखं शयिताया योषित ऊरुमध्ये तथैव शयितस्य नायकस्य ऊर्वोः प्रविष्टयोः सतोः परस्परमालिङ्ग्य रमते चेत्समुद्रनाम करणं भवतीत्यर्थः ॥ २९ ॥

अविभज्य समुद्रकयन्त्रमिदं युवतिर्यदि वा पुरुषो भजते ।
परिवृत्तमिति स्फुटमभ्यसनाल्लघुपूर्वतनोः परिवर्तनकम् ॥३०॥

अविभज्येति । पूर्वोक्तं समुद्रकयन्त्रमेवाविभज्य अविघट्य अविघटितं कृत्वा युवतिः पुरुषो वा बहुधा मध्यगतावूरू बहिः कृत्वा बहिर्गतौ कृत्वा परिवृत्तं भजते यदि इति स्फुटमभ्यसनाल्लघुपूर्वतनोः पुरुषस्य स्त्रियो वा एतत्करणं परिवर्त्तनकम् ॥ ३० ॥

स्थितमासितसुन्दरि पादयुगं यदि कुञ्चितमेकत एव भवेत् ।
लघुतिर्यगथो पुरुषोऽपि तथा मिलतीति मतं किल युग्मपदम् ॥३१॥

स्थितमिति । अत्र स्थितशब्दार्थः लक्षणया प्रसारितमुच्यते । आसितसुन्दरिपादयुगमासीनापादयुगमेकतो यदि कुञ्चितं भवेत् । एवमुक्तं भवति, आसीनाया एकः पादः प्रसारितः, एकः पादः कुञ्चितस्तदा पुरुषः संमुखीभूय स्थित्वा स्वपदं तस्याः प्रसारितपदस्याधः प्रसार्य इतरत्कुञ्चितमात्मपदं कुञ्चितेन तत्पदेन दृढं श्लेषयित्वा अन्योऽन्यमालिङ्ग्य चुम्बन्तौ मिलितौ चेद्युग्मपदं करणं भवति ॥ ३१ ॥

यदि सुन्दरिकूर्परमध्यगतः स्वकटिं भ्रमयन् पुरुषो रमते ।
भवतीह विमर्दितकं तदिदं किल सम्मुखसङ्गति मार्कटकम् ॥३२॥

यदिसुन्दरीति । सुन्दरीकूर्प्परमध्यगतः स्वकटिं परिभ्रमयन् पुरुषो मुहूरमते यदि योषिति बाहुभ्यां पुरुषस्य मध्यमावेष्ट्य उपविष्टायां पुरुषः संमुखीभूयाऽऽलिङ्ग्य स्वकटिं भ्रामयन् मुहूरमते तदिदं करणं विमर्दितकं भवति। तदेव संमुखसङ्गति चेत् मार्कटकं नाम करणं किल भवति ॥ ३२ ॥

उक्तमेतदिह युक्तसंगमे भेदजातमथ चित्रमोहनम् ।
स्तम्भकुड्यमथवा समाश्रितादूर्ध्वगौ यदि तदा चतुर्विधम् ॥३३॥

उक्तमेतदिति । इह उपविष्टसङ्गमे आसीनयोः संगमे एतत्करणभेदजातमुक्तं कथितम्। अथ चित्रमोहनं चित्ररतं स्तम्भकुड्यविटपादिसंश्रयात् स्तम्भादीनाश्रित्य ऊर्ध्वगौ यदि तदा चित्ररथाख्यं करणं, तच्चतुर्विधं भवति ॥ ३३ ॥

चतुर्विधत्वं दर्शयति।

कूर्परेण परिवेष्ट्य योषितो जानु कण्ठमवलम्ब्य यत्पदा ।
ऊर्ध्वमुन्मदनरस्य मेहनं योजयेत्तदिह जानुकूर्परम् ॥३४॥

कूर्प्परेणेति । स्तम्भादीनाश्रित्य स्थिताया योषितो नायिकायाः कण्ठमात्मकूर्प्परेण परिवेष्ट्य तस्या जानु पादाभ्यामालम्ब्यावष्टभ्य पुमान् तदूर्ध्वं यथा भवति तथा यत्करणं योजयेत् उन्नतमुखस्य तस्य करणं तज्जानुकूर्परं भवति ॥ ३४ ॥

योषिदेकचरणे समुच्छ्रिते जायते च हरिविक्रमाह्वयम् ।
भित्तिगप्रियकरस्य सुन्दरी पादयोर्द्वितलसंज्ञकं रतम् ॥३५॥

योषिदेकेति । स्तम्भादीनाश्रित्य स्थिताया योषित एकचरणे समुच्छ्रिते समुत्थिते सति पुरुषे तत्कण्ठमवलम्ब्य रममाणे हरिविक्रमाह्वयं करणं जायते, हरिविक्रमनामकं करणमित्यर्थः। योषिद् भित्तिगस्य भित्तिमाश्रित्य स्थितस्य पुरुषस्य करतलयोः आत्मचरणौ निधाय प्रियकण्ठमाश्रित्य रमते चेत्तत् करणं द्वितलं नाम ॥ ३५ ॥

भित्तिगस्य करपङ्कजे स्थिता प्रेयसो विधृतकण्ठदोर्लता ।
ऊरुपाशपरिवेष्टितप्रियश्रोणिरंघ्रितलताडनाश्रया ।

दोलति श्वसिति सीत्कृताकुला योषिदेवमवलम्बितं मतम् ॥३६॥

भित्तिगस्येति। भित्तिगस्य भित्तिमाश्रितस्य प्रेयसः प्राणेश्वरस्य करपङ्कजे अञ्जलौ स्थिता करतलयोरुपविष्टा, विधृतकण्ठदोर्लता विधृता कण्ठे दोर्लता बाहुलता यया सा प्रियस्य कण्ठे आसाञ्जित-दोर्लतेत्यर्थः। ऊरुपाशपरिवेष्टितप्रियश्रोणिः आत्मन ऊरुपाशेन प्रिय-श्रोणिमावेष्टयन्ती, अंघ्रितलताडनाश्रया कुड्यऽङ्घ्रितलताडनमाश्रयो यस्याः सा अंघ्रितलताडनाश्रया कुड्यं चरणाभ्यामाक्रम्य वलन्ती-त्यर्थः। तदा योनौ ध्वजं प्रवेश्य दोलति दोलेव भवति, श्वसिति श्वासाकुला भवति, सीत्कृतकरणेन आकुला भवति चेदवलम्बितं नाम करणं मतम्, अवलम्बितनामकं करणं भवतीत्यर्थः। तदानीं हस्तलाघवात् कदाचिदूर्ध्वं गच्छति कदाचिदधस्ताद् गच्छतीति भावः ॥ ३६ ॥

इतः परं व्यानताख्यं रतमुच्यते।

व्यानतं रतमिदं यदि प्रिया स्यादधोमुखचतुष्पदाकृतिः।
तत्कटिं समधिरुह्य वल्लभः स्याद् वृषादिपशुसंस्थितिस्थितः ॥३७॥

व्यानतमिति। यदि प्रिया अधोमुखचतुष्पदाकृतिः अधोमुख-गोरूपादिस्वरूपा स्यात्, वल्लभश्च तस्याः कटिं समधिरुह्य वृषादि-पशुवत्संस्थितिस्थितः स्यादिदं व्यानतं रतमुच्यते व्यानताख्यं करणं भवतीत्यर्थः ॥ ३७ ॥

न्यस्तहस्तयुगला निजे पदे योषिदेति कटिरूढवल्लभा।
अग्रतो यदि शनैरधोमुखी धेनुकं वृषवदुन्नते प्रिये ॥३८॥

न्यस्तहस्तेति। निजे पदे स्वकीयचरणे न्यस्तहस्तयुगला, कटि-रूढवल्लभा कटिप्रदेशस्थितनायका, अधोमुखी अग्रतः शनैर्धेनुवदेति गच्छति, यदि प्रिये प्राणेश्वरे वृषवद् वृषभवदुन्नते सति तत् करणं धेनुकं नाम धेनुकाख्यं करणं भवतीत्यर्थः ॥ ३८ ॥

भूगतस्तनभुजास्यमस्तकामुन्नतस्फिचमधोमुखीं स्त्रियम्।
क्रामति स्वकरकृष्टमेहनो वल्लभः कथितमैभमुच्यते ॥३९॥

भूगतस्तनेति। भूगतस्तनभुजास्यमस्तकां भूमिगतकुचभुजवदनमस्तकाम्, उन्नतस्फिचम् उन्नतत्रिकस्थानाम्, अधोमुखीं स्त्रियं भुवं, शय्यां वा स्तनौ, भुजौ, आस्यं, मस्तकं च नीत्वा उन्नतत्रिकस्थानामित्यर्थः। स्वकरकृष्टमेहनः स्वकरधृतध्वजो वल्लभः कारिवत् क्रामति चेत् तदैभं नाम करणमुच्यते ॥ ३९ ॥

ऐणगार्दभिकशौनसैरिभप्रायमेवमपरं च कल्पयेत् ॥४०॥

ऐणेति। ऐणगार्दभिकशौनसैरिभप्रायमेवं सुरतं प्रकल्पयेत्। यादृक् तेषां रतं तथा सुरतं प्रकल्पयेत्, एवं च तत्तन्नामकं करणं भवति। एणः प्रसिद्धः, गर्दभः खरः, सैरिभो महिषः ॥ ४० ॥

यन्मिथस्तु विपरीतसक्थिकं स्त्रीयुगं युगपदेति कामुकः।
कामुकावपि मदाकुलाबला सम्पदोपपदघाटकं विदुः ॥४१॥

यन्मिथइति। मिथः विपरीतसक्थिकं विपरीतोरुकं स्त्रीद्वयं कामुकः कामी युगपदेति गच्छति। मदाकुलाबला कामुकावपि युगपद् गच्छति यत्तत्करणं संपदोपपदघाटकं विदुः संपदमुपपदं यस्य तत् घाटकं संघाटकं विदुरित्यर्थः। तस्योपाय उच्यते, स्त्रीद्वये शय्यायां वैपरीत्येन शायिते सत्येकस्यां योनौ ध्वजं निधाय भ्रामयन्नितरस्यां बाह्यरतं कुर्वन् इतरस्यां योनावङ्गुलीं जिह्वां वा निधाय रमते चेत्तत्करणं संघाटकं भवति। अन्यदप्याह, उभयोः पुरुषयोर्वैपरीत्येन शायितयोरेकस्मिन्नङ्गना उपरिरतं कुरुते; इतरस्मिन् मुखरतिं बाह्यरतिं वा कुर्वती रमते चेत्तदेव करणम्।

पशूनां मृगजातीनां पतङ्गानां च विभ्रमैः।
तैस्तैरुपायैश्चित्तज्ञो रतियोगान् विवर्द्धयेत् ॥
तत्सात्म्याद्देशसात्म्याच्च तैस्तैर्भावैः प्रयोजितैः।
स्त्रीणां स्नेहश्च रागश्च बहुमानश्च जायते ॥

इति ॥ ४१ ॥

इत्थमन्यदपि योषितैकया रम्यते नरचतुष्टयं यदि।
कामुकेन युगपच्च खण्डनाद् वक्त्रहस्तपदलिङ्गसङ्गतः ॥४१॥(क)

चित्रयन्त्रविधिरेष भाषितो लिङ्गयोनिपरिघट्टनाविधौ।
मन्थपीडितवराहघातकाद्युक्तयोऽनतिफला मयोज्झिताः ॥४२॥

चित्रेति। लिङ्गयोनिपरिघट्टनाविधौ लिङ्गेन ध्वजेन योन्याः परिघट्टनाविधौ एष चित्रयन्त्रविधिर्दर्शितः, चित्राणि करणान्युक्तानीत्यर्थः। मन्थपीडितवराहघातकाद्युक्तयः मन्थः, पीडितकम्, वराहघातक इत्याद्युक्तयः अनतिफलाः फलहीना इति मयोज्झिताः त्यक्ताः, मन्थादिलक्षणं वात्स्यायनेनाक्तमत्र किञ्चिल्लिख्यते। तस्याः प्राग्यन्त्रयोगात्करेण सम्बाधं गज इव क्षोभयेद् आ मृदुभावात्। ततो यन्त्रयोजनम्। उपसृप्तकं, मन्थनं, हुलः, अवमर्द्दनं, पीडितकं, निर्घातो, वराहघातः, वृषाघातः, चटकविलसितं, सम्पुट इति पुरुषोपसृप्तानि। न्याय्यमृजु संमिश्रणमुपसृप्तकम्। हस्तेन लिङ्गं सर्वतो भ्रामयेदिति मन्थनम्। नीचीकृत्य जघनमुपरिष्टाद्घट्टयेदिति हुलः। तदेव विपरीतं सरभसमवमर्द्दनम्। लिङ्गेन समाहत्य पीडयंश्चिरमवतिष्ठेद् इति पीडितकम्। सुदूरमुत्कृष्य वेगेन स्वजघनमवपातयेदिति निर्घातः। एकत एव भूयिष्ठमवलिखेदिति वराहघातः। स एवोभयतः पर्य्यायेण वृषाघातः। सत्कृन्मिश्रितमनिष्क्रमय्य द्विस्त्रिश्चतुरिति घट्टयेदिति चटकविलसितम् ॥ ४२ ॥

ऊर्ध्वतोथ परितोप्यधस्तथा पीडनाहननघट्टनाविधाः।
मन्मथाकुलनितम्बिनीभगे योजयेत्करधृतं ध्वजं पुमान् ॥४३॥

ऊर्द्ध्वतइति। ऊर्द्ध्वतः, परितः तथाऽधस्तात्पीडनाहननघट्टनाविधाः क्रियाः, मन्मथाकुलनितम्बिनीभगे कामी लोहदारुकृतेन कृतकध्वजेन योजयेत्कुर्वीत उच्चरते, नीचे तु स्वयमेव रतिं कुर्वीत, उच्चरते कृतकध्वजेन रतिमपि कुर्वीत, यतस्तस्याः तृप्तिर्ध्वजेन नास्ति ततः कृतकध्वजेन कुर्वीत ॥ ४३ ॥

रतिभावलक्षणमुच्यते।

येन सा भ्रमितदृष्टिमण्डला स्यात्ततस्तु परिपीडयेद्भृशम्।
स्रस्तता वपुषि, मीलनं दृशो, मूर्छना च रतिभावलक्षणम् ॥४४॥

येनेति। येन सा भ्रमितदृष्टिमण्डला स्यात्ततो भृशं तां परिपीडयेत्। येन यन्त्रेण सा सुखपारवश्येन भ्रमितदृष्टिमण्डला स्यादत एवैनां पीडयेदित्यर्थः। एतद्रहस्यं युवतीनामिति वर्णितम्। वपुषि स्रस्तता गात्रशैथिल्यं, दृशोर्मीलनं नेत्रमीलनं, मूर्छना निश्चेष्टत्वं च रतिभावलक्षण वीर्यपातचिह्नम्॥ ४४॥

श्लेषयेत्स्वजघनं मुहुर्मुहुः सीत्करोति मदगर्विताकुला।

भावसिद्धिसमयस्य सूचकं, वक्ष्यमाणमरतेस्तु लक्षणम्॥४५॥

श्लेषयेदिति। मुहुर्मुहुः स्वजघनं श्लेषयेत्सङ्घट्टयेत्, मदगर्विताकुला तद्विह्वलवती नायिका सीत्करोति, एतद्भावसिद्धिसमयस्य सूचकं, भावसिद्धिश्चरमधातुमोक्षस्तस्य सूचकम्, स्त्रीणां स्वभावसिद्धिसमयलक्षणम्। अरतेस्तु वक्ष्यमाणं लक्षणम्॥ ४५॥

अतृप्तिलक्षणमुच्यते

हस्तमाधुवति हन्ति नो ददात्युज्झितुं झटिति लंघयेदिति।

स्वेच्छया श्रमिणि वल्लभेऽथवा योषिदाचरति पूरुषायितम्॥४६॥

हस्तमाधुवतीति। हस्तमाधुवति हस्तकम्पनं करोति, हन्ति कान्तं ताडयति, उज्झितुं त्यक्तुं नो ददाति नेच्छति, झटिति लङ्घयेदारोहति। इति वल्लभे श्रमिणि कान्ते रति श्रमखिन्ने सति तदा योषित्स्वेच्छया पुरुषायितमुपरि रतमाचरति, रतादौ विनोदाय पुरुषायितं क्रियते। तच्च द्विविधम्॥ ४६॥

आदितो घटितयन्त्रमेव वा तं निपात्य नरवद्विचेष्टते।

चक्रवद्भ्रमति कुञ्चितांघ्रिका भ्रामरं नृजघने समुद्गते॥४७॥

आदितइति। आदितः प्राग्घटितयन्त्रमेव, वा पूर्वसङ्गतयन्त्रमेव, अथवा तं निपात्य अधःकृत्य कान्तं स्वयमभिरुह्य नरवद्विचेष्टते, वाडवकरणेन लिङ्गमवगृह्य निष्कर्षयन्त्याः पीडयन्त्या वा चिरमवस्थानं सन्दंशः। एवं चेत्सन्दंशनाम करणम्। कुञ्चिताङ्घ्रिकाऽऽकुञ्चितवामपादा चक्रवद्भ्रमति चक्राभ्रमरम्, नृजघने समुद्गते सति भ्रामरं करणं भवतीत्यर्थः। तत्र रते नृजघनमुत्क्षिपेत् आभ्यासिकं तत्॥ ४७॥

सर्वतः कटिपरिभ्रमो यदि प्रेङ्खपूर्वमिदमुक्तमूलितम् ।
ताडनं च विदधीत सीत्कृतव्यस्तसास्मितमुखी वदेदिदम् ॥४८॥

सर्वतइति । यदि सर्वतः कटिपरिभ्रमः सर्वतः स्वजघनमेव दोलायमानं भ्रामयेदिति प्रेङ्खपूर्वं प्रेङ्खशब्दोपपदम् ऊलितं प्रेङ्खोलिताख्यमिति उक्तं कथितम् । ताडनं संप्रहरणं विदधीत कुर्वीत, सीत्कृतव्यस्तसास्मितमुखी सीत्कारसहितसहास्यानना सती तदा योषित् इदं वक्ष्यमाणप्रकारं वदेत् कथयेदित्यर्थः ॥ ४८ ॥

पातितोऽसि कितवाधुना मया हन्मि संवृणु कृतोऽसि निर्मदः ।
निघ्नती क्वणितकङ्कणं मुहुः कृष्णकुन्तलविचुम्बिताधरा ।
*सान्द्रदोलितनितम्बमाकुला कर्मणश्च विरमेदपि स्वयम् ॥४९॥

पातितोसीति । हे कितव ! अधुना मया पातितोऽसि, हन्मि तव प्राणानाहरामि, संवृणु, निर्म्मदः कृतोसीति क्वणितकङ्कणं शब्दितकङ्कणं यथा तथा निघ्नती प्रियं ताडयन्ती,मुहुः कृष्णकुन्तलैर्नीलकचैर्विचुम्बिताधरा स्पृष्टाधरा, सान्द्रदोलितनितम्बं निरन्तरप्रेङ्खोलितनितम्बं यथा तथा आकुला सती कर्म्मण उपरिसुरतात् क्षणं विरमेत् विरता भवेत् ॥ ४९ ॥

सश्रमामथ विभाव्य पातयेत् सम्पुटं च घटयेद्विसर्जने ।
तृप्तिमेति यदि नैवमप्यसावाचरेद्गदितमङ्कुलीरतम् ॥ ५० ॥

सश्रमामिति । अथ सश्रमां रतिश्रान्तां विभाव्य पातयेत्तामधःकृत्वा पुरुषोऽधिरुह्य कर्म्म कुर्वीत, विसर्जने मोक्षकाले सम्पुटं घटयेत् सम्पुटाख्यं करणं योजयेत् । एवमपि सा तृप्तिं यदि नैवेति तदाऽसौ गदितं कामशास्त्रोक्तमङ्कुलीरतमाचरेत् कुर्यादित्यर्थः ॥५०॥

योजयेन्न विपरीतमोहने नूतनप्रसवपुष्पयोगिनीम् ।
गर्भिणीं च हरिणीं च पीवरां कन्यकामपि कृशां च वर्जयेत् ॥५१॥

योजयेदिति । विपरीतमोहने पुरुषायिते नूतनप्रसवां नूतन-

प्रसूतां पुष्पयोगिनीम् ऋतुप्राप्तां, गर्भिणीं च, हरिणीं मृगीं च, पीवरां स्थूलां, कन्यकां बालामपि, कृशां चाङ्गनां वर्जयेत् त्यजेत् ॥ ५१ ॥

मोहनं मदनयुद्धमूचिरे तस्य ताडनमिहाङ्गमिष्यते ।
आर्त्तिरूपमपि तत्र सीत्कृतं तच्च भूरिविधमुच्यते बुधैः ॥५२॥

मोहनमिति । मोहनं सुरतं मदनयुद्धमूचिरे कलहरूपं सुरतमाचक्षते, पीडात्मकत्वाद्वामशीलत्वाच्च तस्य युद्धस्य ताडनमङ्गमिष्यते, ताडनं सुरताङ्गमित्यर्थः । आर्तिरूपमपि सीत्कृतं तस्य सुरतस्याङ्गमिष्यते । तच्च सीत्कृतं बुधैः भूरिविधं बहुप्रकारमुच्यते ॥ ५२ ॥

ताडनं समतलापहस्ततो मुष्टिना प्रसृतकेन चोदितम् ।
पृष्ठपार्श्वजघनस्तनान्तरे मूर्ध्नि, ते हि मदनस्य भूमयः ॥ ५३ ॥

ताडनमिति । समतलापहस्ततः समतलेन अपहस्तेन च, तृतीयार्थे तसिः । मुष्टिना प्रसृतकेन च तत्ताडनमुदितमुक्तम्, एतेषां समतलादिताडनविशेषाणां स्थानानि । पृष्ठं, पार्श्वे, जघनं, स्तनान्तरं, मूर्द्धा, हि यस्मात्ते मदनस्य भूमयः स्थानानि ॥ ५३ ॥

विरतान्यष्टावुच्यन्ते ।

हिङ्कृतं स्तनितसीत्कृतोत्कृतं फूत्कृतं श्वसितरोदनादिकम् ।
मुञ्च पीडय गृहाण जीवय त्राहि हा धिगिति सीत्कृतं विदुः ॥५४॥

हिङ्कृतमिति । हिङ्कृतं, स्तनितं, सीत्कृतम्, उत्कृतं, फूत्कृतं, श्वासितं, रोदनमित्यादिकं, मुञ्च, पीडय, गृहाण, जीवय, त्राहि, हा धिगिति च सीत्कृतं विदुः ॥ ५४ ॥

तच्च लावककपोतकोकिलाहंसकेकिसदृशै रुतक्रमैः ।
मिश्रितं प्रहरणे प्रयुज्यते ह्यन्यदापि रुतमिष्यते विटैः ॥ ५५ ॥

तच्चेति । तत्सीत्कृतं लावक, कपोत, कोकिल, हंस, केकिसदृशै रुतक्रमैः प्रयुञ्जीत । अम्बार्थाः शब्दा वारणार्थाः मोक्षार्थः अलमर्थाश्च इति वात्स्यायनः । लावकादीनां विरुतसदृशप्रारम्भैः मिश्रितं मिश्रीकृतं तच्च सीत्कृतं प्रहरणे ताडने सति प्रयुज्यते, अन्यथा रुतं ताडनमन्तरेणापि गद्गदरूपं सीत्कृतमिष्यते इष्टमित्यर्थः ॥ ५५ ॥

ऊर्ध्वमुच्चरति कण्ठनासिका हिङ्कृतं स्तनितमभ्रघोषवत्।
वंशविस्फुटनवच्च सीत्कृतं फूत्कृतं बदरपातवज्जले ॥ ५६ ॥

ऊर्ध्वमिति। कण्ठनासिका ऊर्ध्वं हिङ्कृतम् उच्चरति, प्राण्यङ्गत्वादेकवद्भावः। स्तनितं चाभ्रघोषवद्, मेघघोषवत्, सीत्कृतं वंशविस्फुटनवद्वेणुदारिनवच्छब्द उत्पद्यते तद्वत्फूत्कृतं जले बदरपातवद्बदरपातशब्दानुकरणं, फूत्कृतोक्तलक्षणं स्वशब्दानुकरणमेव, एतान्ते सशब्दः श्वसनं श्वसितं च श्वसितरुदिते। रुदितं प्रसिद्धम् ॥५६॥

चतुर्विधताडनलक्षणमाह।

रोदनध्वनिकरीं कराहतिं हृत्प्रयोज्यमपहस्तकं विदुः।
मुष्टिरत्र विदितस्तु पृष्ठतो मूर्द्धनि प्रसृतकं फणाकृति ॥ ५७ ॥

रोदनेति। रोदनध्वनिकरीं कराहतिं, हृदि प्रयोज्यमपहस्तकं विदुः। युक्तयन्त्रायाः स्तनान्तरे अपहस्तेन प्रहरेत्। मन्दोपक्रमं वर्धमानरागमा परिसमाप्तेः। तत्र हिङ्कारादीनामनियमेनाभ्यासेन विकल्पेन च तत्कालमेव प्रयोगः। अत्र मुष्टिर्विदितः पृष्ठतः पृष्ठे प्रयोज्यः, तत्र साम्ये च स्तनितकूजितरुतानि प्रतिघातं च कुर्वीत। मूर्द्ध्नि सर्पफणाकृति प्रसृतकं, किञ्चिदाकुञ्चिताङ्गुलिना करेण शिरसि प्रहरणं तत् संप्रसृतकम्, तत्रान्तर्मुखेन सीत्कृतं कूजितं च कुर्यात् ॥५७॥

हस्ततालहननं च जाघने पार्श्वयोः समतलं प्रयुज्यते।
कर्त्तरीप्रभृति दक्षिणापथे ताडनं तदिह दूषितं बुधैः ॥ ५८ ॥

हस्ततालेति। हस्ततालेन हननं जाघने जघनप्रदेशे, पार्श्वयोः कक्षाधःप्रदेशयोश्च समलतं प्रयुज्यते, तत्र लावकहंसकूजितं भवेत्। कर्तरीप्रभृति ताडनं ताडनभेदः, दक्षिणराज्ये दक्षिणपथे कुर्युः, तदिह बुधैर्दूषितं, कर्तरी करपरभागेन ताडनं तद्दक्षिणापथ एव ॥ ५८ ॥

ताडयेद्युवतिमङ्कगामिनीं पृष्ठतः प्रियतमः स्वमुष्टिना।
साभ्यसूयमिव सापि तन्तथा क्रन्दति श्वसिति कामकातरा ॥५९॥

ताडयेदिति। अङ्कगामिनीं युवतीं प्रियतमः स्वमुष्टिना पृष्ठे ताडयेत। सापि साभ्यसूयमिव तं तथा ताडयेदित्यर्थः, कामकातरा

मदनविह्वला सती क्रन्दति शब्दं करोति, श्वसिति च ॥ ५९ ॥

आसमाप्ति हृदये प्रयुज्यते युक्तयन्त्रयुवतेः पुमान् शनैः ।
वर्धमानमपहस्तताडनं सापि सीत्कृतमिहाचरेन्मुहुः ॥ ६० ॥

आसमाप्तीति । आसमाप्ति रतावसानपर्यन्तं युक्तयन्त्रयुवतेः हृदये शनैर्वर्द्धमानमपहस्तताडनं प्रयुज्यते । सापि इह मुहुः सीत्कृतमाचरेत् ॥ ६० ॥

तत्र चेद्विवदते शिरस्तदा ताडयेत् प्रसृतकेन कात्कृतम् ॥
फूत्कृतं युवतिराचरेद्भृशं ताडने श्वसितरोदिते अपि ॥ ६१ ॥

तत्रचेदिति । तत्र अपहस्तं विवदते वारयति चेत्प्रसृतकेन कात्कृतं यथा तथा कादिति शब्दानुकरणं, शिरस्ताडयेत्, तत्र ताडने युवतिः फूत्कृतमाचरेत् श्वसितरोदिते अपि आचरेत् ॥६१॥

सत्वरं समतलेन ताडयेदासमाप्ति जघने च पार्श्वयोः ॥
रागपातसमये नितम्बिनी हंसलावकरुतं समाचरेत् ॥ ६२ ॥

सत्वरमिति । आसमाप्ति जघने, पार्श्वयोश्च सत्वरं समतलेन ताडयेत् । नितम्बिनी रागपातसमये रागद्रवकाले हंसलावकरुतं समाचरेत् हंसलावकाविव कूजेदित्यर्थः ॥६२॥

क्रन्दितं श्वसितमाचरेन्मुहुर्मोहनान्तसमये नितम्बिनी ॥
अन्यदापि विगतार्त्तिनिःसहा कण्ठकूजितवती विराजते ॥ ६३ ॥

क्रन्दितमिति । मोहनान्तसमये सुरतसमाप्तिवेलायां नितम्बिनी क्रन्दितं श्वासितं च समाचरेत् । अन्यदा सुरतकालं विनापि नितम्बिनी विगतार्त्तिनिःसहा कण्ठे कूजितवती विगता आर्त्तिर्यस्याः सा विगतार्त्तिः अत एव निःसहा कण्ठकूजितं हूँ हूँ शब्दः तद्वती सती विराजते ॥६३॥

सानुरागपरुषत्वचण्डतां पूरुषेषु दधति स्त्रियो रते ॥
रागतो भवति सात्म्यतः क्वचिद् व्यत्ययोऽपि न चिरं मनोहरः ६४

सानुरागेति। स्त्रियः पुरुषेषु सानुरागतां परुषतां चण्डतां च रते दधत्यावहन्ति, व्यत्ययो विपर्यासः पुरुषायितमिति यावत्, स कश्चिद्रागतः स्नेहात्सात्म्यतो देशजात्स्वभावजाद्वा मनोहरो भवति चिरं मनोहरो न भवति ॥६४॥

पञ्चमी गतिमुपेत्य वीक्ष्यते स्थाणुवारिततुरङ्गमो यथा ॥
कामुकावपि तथा रताहवे छेदघातकदनं न पश्यतः ॥ ६५ ॥

पञ्चमीमिति। पञ्चमीं गतिमुपेत्य स्थाणुवारितः स्थाणुकृतबन्धनः तुरङ्गमोऽश्वः यथा वीक्ष्यते कामातुरस्य तुरगस्यावस्थाविशेषः पञ्चमी गतिर्नाम, तथाऽऽकुलौ मदान्धौ कामिनौ कामुकावपि छेदघातकदनं न पश्यतः, न जानतः छेदः अङ्गुल्यादे, घातस्ताडनं, कदनं कलहः ॥६५॥

किंतु सात्म्यमभिचिन्त्य योषितां तीव्रमन्दमुपचारमाचरेत् ॥
औपरिष्टकविधानदर्शिना निन्दिता च मुनिनेति किं तया ॥६६॥

इति श्रीकोक्कोककृते रतिरहस्ये सुरताधिकारो
नाम दशमः परिच्छेदः ॥



किंत्विति। किंतु योषितां सात्म्यमभिचिन्त्य सात्म्यानुरूपं तीव्रमन्दमुपचारमाचरेत् औपरिष्टकविधानदर्शिना मुनिना वात्स्यायनेन कथितापि गादितापि निन्दिततया किं प्रयोजनमिति नोक्तमित्यर्थः। औपरिष्टकं नाम मुखरतिः तस्य विधानं करणं तस्य दर्शिना। तथाहि

यथा हि पञ्चमीं धारामापन्नस्तुरगः पथि।
स्थाणुं श्वभ्रं दरीं वापि वेगान्धो न समीक्षते ॥
एवं सुरतसंमर्दे रागान्धौ कामिनावपि।
चण्डवेगौ प्रवर्तेते समीक्षेते नचात्ययम् ॥
तस्मान्मृदुत्वं वेगत्वं युवत्या बलमेव च।
आत्मनश्च बलं ज्ञात्वा तथा कुर्याच्च शास्त्रवित् ॥

न सर्वदा न सर्वासु प्रयोगाः साम्प्रदायिकाः ।
स्थाने, देशे, च काले च, योग एषां विधीयते ॥६६॥

इति श्रीकाञ्चीनाथकृतायां रतिरहस्यदीपिकायां
सुरताधिकारो नाम दशमः परिच्छेदः ॥



अथ किमर्थं कीदृशी परिणेया, कीदृशी च वर्जनीयेति विविच्यते ।

त्रिगणमविकलार्थं साधयन् साधु लोकः
परिणयतु सवर्णां शास्त्रतोऽनन्यपूर्वाम् ॥
परिणयसहवासक्रीडितादीनि मैत्री-
मधमसमाधिकाभ्यां नैव कुर्वन्ति सन्तः ॥ १ ॥

त्रिगणमिति । अविकलार्थम् अविकलः अरहितः अर्थः प्रयोजनं यस्येति, त्रिगणं धर्म्मार्थकामान् साधु यथा तथा साधयन् लोकः शास्त्रतः शास्त्रेषूक्तप्रकारेणानन्यपूर्वां न विद्यते अन्यः पतिः पूर्वं यस्यास्ताम् सवर्णां समानजातिं "वर्णो द्विजादौ शुक्लादा" वित्यमरः। परिणयतु । परिपूर्वो नयतिर्विवाहार्थे वर्तते । सवर्णायामनन्यपूर्वायां शास्त्रतोऽधिगतायां कन्यायां धर्म्मार्थपुत्रसम्बन्धः पक्षवृद्धिरिति त्रिगणसाधनम् । परिणयसहवासक्रीडितादीनि, परिणयो विवाहः, सहवास एकत्र निवासः, क्रीडितं क्रीडा इत्यादीनि, मैत्रीं वा सन्तः सज्जनाः अधमसमाधिकाभ्यामधनेनाधिकेन च जनेन सह नैव कुर्वन्ति, समेन सह कुर्वन्तीत्यर्थः । विवाहश्च विवादश्च समयोरेव शोभत इति प्रसिद्धेः ॥१॥

कुवलयदलकान्तिः स्वर्णगौरद्युतिर्वा
करचरणनखेषु स्निग्धरक्ता तथाऽक्ष्णोः ॥
सममृदुपदयुग्मा स्वल्पभुक् स्वल्पनिद्रा
कमलकलशचक्राद्यङ्किता पाणिपादे ॥ २ ॥

कुवलयेति । कुवलयदलसमानकान्तिः, स्वर्णगौरद्युतिर्वा, करचरणनखेषु अक्ष्णोश्च स्निग्धरक्तत्वं स्निग्धरक्तकरचरणनखनयनेत्यर्थः।

सममृदुपदयुग्मा, स्वल्पाहारा, स्वल्पनिद्रा, पाणिपादे पाण्योः, पादयोश्च पाणिपादे प्राण्यङ्गत्वादेकवद्भावः। कमलकलशचक्राद्याङ्किता रेखाकारकमलाद्याङ्कितेत्यर्थः ॥२॥

अकपिलकचपाशा चाप्रलम्बोदरास्या
वरणविधिषु कन्या शस्यते शीलसारा ॥
बहिरथ रुदती या जृम्भते या च सुप्ता
वरणविधिसमेतास्तां बुधा वर्ज्जयन्ति ॥ ३ ॥

अकपिलेति। अकपिलः कपिलवर्णरहितः नील इति यावत्। कचपाशः कुन्तलकलापो यस्याः सा, अप्रलम्बोदरास्या आस्यम्, उदरं च यस्याः प्रलम्बं न भवति, तथोक्ता सा। शीलेन चारित्र्येण सारा उत्कृष्टा कन्या वरणविधिषु शस्यते। एवंलक्षणलक्षिता कन्या प्रशस्येत्यर्थः। वरणकाले कन्यां दृष्ट्वा निमित्तं पश्येदित्यत आह बहिरिति या कन्या बहिर्गृहस्य बाह्यदेशे वरणार्थं गमनवेलायां रुदती. दृश्यत इति शेषः। या कन्या जृम्भां करोति, या कन्या सुप्ता, वरणविधिसमेता बुधास्तां कन्यां वर्ज्जयन्ति ॥ ३ ॥

गिरितरुतटिनीनां नामभिः पक्षिणां वा
समधिकपरिहीना व्यानतक्रूरगात्री ॥
अधरमधिकलम्बं कोटरं पिङ्गलं वा
नयनमथ वहन्ती कर्कशं पाणिपादम् ॥ ४ ॥

गिरीति। या कन्या गिरितरुतटिनीनां पर्वतवृक्षनदीनां नामभिरुपलक्षिता, अथ वा पक्षिणां नामभिरुपलक्षिता, या समधिकपरिहीना समधिका दीर्घकाया, परिहीना ह्रस्वकाया, व्यानतक्रूरगात्री व्यानता प्रह्वा, क्रूरदेहा, च क्रूरशब्देन कार्कश्यमुच्यते "कर्कशं कठिनं क्रूर" मित्यमरः सा विवर्ज्या। या अधरम् ओष्ठमधिकलम्बं वहन्ती, लम्बोष्ठीत्यर्थः। कोटरं निम्नं, पिङ्गलं वा नयनं वहन्ती, निम्ननयना पिङ्गलाक्षी च, पाणिपादं पाणी च पादौ च पाणिपादं प्राण्यङ्गत्वादेकवद्भावः। कर्कशं कठिनं वहन्ती सापि वर्ज्या ॥ ४ ॥

श्वसिति हसति रोदित्येव या भोजनेपि
स्तनमपि पतितोर्ध्वं बिभ्रती श्मश्रुला वा ॥
विषमकुचयुगा वा वामना शूर्पकर्णी
कुदशनपरुषोक्तिर्दीर्घवक्त्राऽतिदीर्घा ॥ ५ ॥

श्वसितीति । या कन्या भोजने भोजनकाले श्वसिति श्वासाकुला भवति, हसति हासाकुला च भवति, रोदिति रोदनशीला वा भवति, या पतितोर्ध्वं पतितचूचुकं स्तनं वहति, श्मश्रुला जातश्मश्रुः, विषमकुचयुगा वा एकः कुचो निम्न एक उन्नत एवंविधं कुचयुगलं यस्यास्सा, वामना खर्वा, शूर्पकर्णी शूर्पाकारश्रोत्रा, कुदशनपरुषोक्तिः कुदशना, रूपवर्णाभ्यां कुत्सितदशनेत्यर्थः । परुषोक्तिश्च परुषवचना निष्ठुरभाषिणी वा, दीर्घवक्त्रा अतिदीर्घवदना च, एता वर्ज्याः॥५॥

विटविषयरता वा रोमशा पाणिपार्श्वे
स्तनपरिसरपृष्ठे जंघयोरुत्तरोष्ठे ॥
भ्रमणविधिषु यस्याः कम्पते क्ष्मातलं वा
पतति हसनकाले गण्डयोर्वा तरङ्गः ॥ ६ ॥

विटविषयेति । विटविषयरता विटदेशे रता, विटाधिष्ठितस्थलनिवासशीलेत्यर्थः । पाणिपार्श्वे पाण्योः, पार्श्वयोः, स्तनपरिसरे, पृष्ठे, जङ्घयोरुत्तरोष्ठे रोमशा एतेषु स्थानेषु जातरोमा, यस्या भ्रमणविधिषु गमनागमनेषु क्ष्मातलं भूतलं कम्पते, हसनकाले गण्डयोः कपोलयोस्तरङ्गः पतति, कपोलौ तरङ्गितौ कूपवन्निम्नाकारौ भवत इत्यर्थः अथवा तरङ्गः पततीत्यनेन निष्ठीवने फेनबिन्दुर्वा यस्याः कपोलयोः पतति सापि वर्ज्या ॥ ६ ॥

भवति समधिका चेत्पादजाङ्गुष्ठतोऽस्यास्तदुपवसतिरन्या हीयते मध्यमा वा ॥
पतति भुवि कनिष्ठाऽ नामिका वा द्वयं वा
न यदि, वरणकृत्ये कन्यका वर्जनीया ॥ ७ ॥

भवतीति । पादजा तदुपवसतिः अङ्गुष्ठसमीपजा अस्याः कन्याया अङ्गुलिस्तर्जनीत्यर्थः । अङ्गुष्ठतः अंगुष्ठादधिका या तर्जनी, अत्र वामपाद इत्युपदेशः । यस्याः कन्यायाः अन्याङ्गुलिर्हीयते हीना भवति, यदि कनिष्ठा कनिष्ठाङ्गुलिसमीपवर्तिनी च अन्याशब्देनोच्यते तथा मध्यमा वा हीयते हीना भवति, यदि कनिष्ठाङ्गुलि, रनामिकाङ्गुलिर्वा भुवि न पतति, यस्याश्च द्वयं वा न पतति भुवं न स्पृशति,सा कन्या वरणकृत्ये वर्ज्जनीया ॥ ७ ॥

विवाहानन्तरं मङ्गलाचारं ब्रूते

अथ परिणयरात्रौ प्रक्रमेन्नैव किञ्चित्
तिसृषु हि रजनीषु स्तब्धता तां दुनोति ॥
त्रिदिनमिह न भिन्द्याद्ब्रह्मचर्यं नचास्या
हृदयमननुरुध्य स्वेच्छया नर्म कुर्यात् ॥८॥

अथेति । परिणयरात्रौ सुलक्षणां विवाह्य विवाहरात्रौ किञ्चिदपि न प्रक्रमेत् । अत्र "क्रमः परस्मैपदेष्विति" दीर्घाभावो मृग्यः । तिसृषु रजनीषु स्तब्धता स्तब्धभावः तां कन्यां दुनोति पीडयति । अस्तेति वा पाठः । इह त्रिदिनं ब्रह्मचर्यं न भिन्द्यात्, त्रीणि दिनानि सुरतपराङ्मुखो भवेदित्यर्थः । अस्याः कन्याया हृदयमननुरुध्य अननुसृत्य स्वेच्छया नर्म क्रीडाकर्म न कुर्यात् । हृदयमनुसृत्यैव नर्म्म कुर्यात् । पराङ्मुखीं स्वयं नर्म्माणि न युञ्जीतेत्यर्थः ॥ ८ ॥

कुसुममृदुशरीरा विद्विषन्ति प्रयोगा-
ननधिगतरहस्यैर्योषितो युज्यमानाः ।
प्रथममिह सखीभिः प्रेम युञ्जीत तस्या-
स्तदधिकमिह कुर्यात्प्रश्रयं येन धत्ते ॥९॥

कुसुमेति । अनधिगतरहस्यैरज्ञातनर्मभिरहृदयज्ञैर्वा युज्यमानाः कुसुममृदुशरीराः पुष्पकोमलाङ्ग्यो योषितः प्रयोगान् विद्विषन्ति । यावज्जीवं सुरतविमुखाः पतिद्वेषिण्यो भवन्तीति भावः । इह अस्मिन् प्रथमं तस्याः सखीभिः प्रेम युञ्जीत तत्सखीभिः सह प्रेम कुर्वीत, येन प्रश्रयं विनयं धत्ते, तदधिकमनन्तरं कुर्यात् ॥ ९ ॥

प्रथमपरिगतायां बालिकायां च चेष्टां
तमसि रहसि चाहुः संस्तुतायां तरुण्याम् ।
क्षणमिह परिरम्भं पूर्वकायेन कुर्याद
मुखमभिवदनेन स्वेन ताम्बूलदानम् ॥१०॥

प्रथमेति । प्रथमपरिगतायां बालिकायां तरुण्यां, वामाशंसितायामिति पाठे तु वामाशंसितायां वक्रप्रार्थनायां सत्याम् इत्यर्थः । तमसि अन्धकारे, रहसि निर्जने इह चेष्टायां पतिः पूर्वकायेन क्षणं परिरम्भं कुर्यात् मुखमभि तस्या मुखस्याभिमुखमित्यर्थः । स्वेन वदनेन ताम्बूलदानं कुर्यात् ॥ १० ॥

प्रणयशपथसामव्याहृतैः पादपातै-
स्तदनुनयविधानैर्ग्राहयेच्च प्रतीपाम् ।
विशदमृदु विदध्याच्चुम्बनं तत्प्रसङ्गा-
त्कलमृदुभिरथैनां योजयेत्केलिवादैः ॥११॥

प्रणयशपथेति । यदि सा प्रतिकूलतां प्रतिपद्यमाना तामेवं तर्हि प्रणयशपथसामव्याहृतैः प्रणयवाक्यैः, शपथैः, सामव्याहृतैः, पादपातैः पादप्रणामैः, अनुनयविधानैश्च, कन्यां ततो ग्राहयेत् । चुम्बनालिङ्गनादिकमिति शेषः । तत्प्रसङ्गात्ताम्बूलप्रसङ्गाद्विशदं मृदु च चुम्बनं विदध्यात् कुर्वीत । अथ एनां कन्यां कलमृदुभिः केलिवादैः क्रीडलापैर्योजयेत् ॥ ११ ॥

अविदित इव पृच्छेत्किञ्चिदल्पाक्षरार्थं
प्रतिगिरमवदन्तीं भूय एवानुरुध्य ।
अहमभिरुचितस्ते तन्वि नो वेति पृष्टा
प्रतिवचनपदे सा मूर्ध्नि कम्पं च कुर्यात् ॥१२॥

अविदिति इति । अविदित इव अजानन्निव किञ्चिदल्पाक्षरार्थम् अल्पाक्षरमल्पार्थं च पृच्छेत्, प्रतिगिरं प्रतिवचनमवदन्तीं

भूय एवानुरुध्य पृच्छेत् । "हे तन्वि ! अहं ते अभिरुचितः अभिमतो नो वे" ति पृष्टा सा प्रतिवचनपदे प्रतिवाक्यस्थाने मूर्ध्नि कम्पं शिरःकम्पं च कुर्यात् ॥ १२ ॥

अथ परिचितायाः आलापयोजने विधिमाह

प्रणयमुपगता चेन्मन्दमन्दं वयस्यां
प्रति कथितरहस्या स्मेरनम्रानना स्यात् ।
कथितमिदमिदं ते धीरसौभाग्यमित्या-
दृतमपि च वयस्या चाभिदध्यात् प्रियस्य ॥१३॥

प्रणयमिति । प्रणयमुपगता स्नेहवती चेन्मन्दमन्दं वयस्यां प्रति कथितं रहस्यं यथा सा स्मेरनम्रानना स्यात् सहसा अधोमुखी भवति, हे धीर ! इदमिदं ते सौभाग्यं कथितम् इत्यादृतम् आदरयुक्तं यथा तथा वयस्या सखी प्रियस्य वल्लभस्याभिदध्यात् ब्रूयात् ॥ १३ ॥

प्रकटवचसि सख्यां नाहमेवं वदामी-
त्यविशदपदवर्णार्द्धोक्तिलीलां विदध्यात् ।
प्रणयविकसने च प्रार्थिता पूगपुष्पा-
द्युपनयति समीपे स्थापयेच्चोत्तरीये ॥१४॥

प्रकटवचसीति । सख्यां प्रकटवचसि प्रकटितवचनायां सत्याम् अस्या भवानतीव वल्लभ इत्युक्तवत्यामित्यर्थः । कन्या लज्जावशादहमेवं न वदामीत्यविशदपदवर्णा अस्पष्टपदाक्षरा सती अर्द्धोक्तिलीलां विदध्यात् । प्रणयविकसने स्नेहविकासे सति प्रार्थिता सती पूगपुष्पादि-समीपे उपनयति उत्तरीये च स्थापयेद् निदध्यात् ॥ १४ ॥

हस्तयोजनप्रकारमाह

स्तनमुकुलमथास्याः संस्पृशेत् पाणिजाग्रैः
करतलमुपगूह्याऽऽनाभि नीत्वा विकर्षेत् ।
तदथ यदि निरुन्ध्यात् संसृजेत्येवमुक्त्वा
सुमुखि न करवाणि क्रियासि त्वं यदीति ॥१५॥

स्तनमुकुलमिति। अथास्याः स्तनमुकुलं पाणिजाग्रैः नखाग्रैस्सं-स्पृशेत्, तथायुक्तां छुरितकेन स्तनमुकुलयोः स्पृशेदित्यर्थः। अनन्तर-मुपगूह्याऽऽलिङ्ग्यात्मकरतलमानाभि नाभिपर्यन्तं नीत्वा पुनर्विक-र्षेत्। अथ यदि तं निरुन्ध्यात् संसृज संसर्गं कुर्वित्येवमुक्त्वा हे सुमु-खि! यदि त्वं क्लिश्यसि क्लेशयुक्ता भविष्यसि पाठान्तरे आश्लेषयु-क्तेत्यर्थः। तर्हि न करवाणि करतलेन नाभिप्रदेशं न स्पृशामि त्वं संसृ-जेति वदेत्॥ १५॥

इति मृदुपरिपाट्योत्सङ्गमानीय युञ्ज-
न्नधिकमधिकमेवं भीषयेच्च क्रमेण।
नखदशनपदैस्त्वामङ्कयिष्यामि वामे
निजवपुषि विकारं किं च कृत्वात्मनैव॥१६॥
त्वदुपजनितमित्यावेद्य सम्प्रत्यहं त्वां
सुमुखि! सखिसमाजे व्रीडयिष्यामि भूयः।
प्रतिवपुरथ चुम्बेदूरुसम्बाहलीलां
क्रमशिथिलितलज्जां संश्रयेन्मेखलां च॥१७॥

इतीति। इत्युक्तप्रकारेण मृदु परिपाट्योत्सङ्गम् अङ्कमानीय अधि-कमधिकं युञ्जन् संगच्छन् क्रमेण भीषयेत् भयं दर्शयेत्, अप्रतिपद्यमानां वक्ष्यमाणप्रकारेण भीतां कुर्यात्। वामे! वक्रे! त्वां नखदशनपदैरङ्क-यिष्यामि, अहं तवाधरे दन्तपदं करिष्यामि, स्तनयोः पृष्ठे वा नखपदं करिष्यामीति भीषयेत्, निजवपुषि मच्छरीरे आत्मनैव स्वेनैव किंचि-द्विकारं नखैः कृत्वा त्वदुपजनितं त्वत्कृतमित्यावेद्य सम्प्रति हे सुमु-खि! सखिसमाजे सखीगणे त्वया नखादिकं मच्छरीरे कृतमित्युक्त्वा भूयस्त्वां व्रीडयिष्यामि लज्जितां करिष्यामि इति जातविश्रम्भां प्रति-वपुः प्रत्यङ्गं चुम्बेत् चुम्बनं कुर्यात्, ऊरुसंवाहलीलां कुर्यात्। संवाहनं मर्दनमिति। निवार्यमाणश्च को दोष इति कुर्यादिति भावः। क्रमशि-थिलितलज्जां क्रमेण ऊरुस्पर्शनादिक्रमेण शिथिलितलज्जां कृत्वा मेख-लां रशनां संश्रयेत् स्पृशेत्। अथवा करशिथिलितेति पाठे करेण

करपरामर्शेन शिथिलितलज्जां तत्र स्तनचुम्बनाच्छुरितकैश्च सिद्धायां सत्यां गुह्यप्रदेशाभिमर्शनं, रशनावियोजनं नीवीविस्रंसनं, वसनपरिवर्त्तन, मूरुमूलसंवाहनम् । एतेषु चास्यान्यापदेशाः । युक्तयन्त्रां रञ्जयेत् नत्वकाले व्रतखण्डनमिति वात्स्यायनः ॥ १६ ॥१७॥

उचितघटितयन्त्रो रञ्जयेच्च क्रमेण
प्रणयविधिविधूते साध्वसध्वान्तरोषे ।
इति विषमगभीरे कन्यकानां रहस्ये
दिगियमिह मयोक्ता कामसूत्रार्थदृष्ट्या ॥१८॥

उचितेति । उचितघटितयन्त्रः क्रमेण उचितं घटितं सङ्गतं यन्त्रं करणं येन सः रञ्जयेदनुरञ्जयेत्, साध्वसध्वान्तरोषे साध्वसे भये, ध्वान्ते अन्धकारे, रोषे च प्रणयविधिना स्नेहविधानेन विधूते नष्टे सति उचितघटितयन्त्रो रञ्जयेदित्यर्थः । अनुशिष्यादात्मानुरागं दर्शयेदिति अनेन प्रकारेण विषमगभीरे विषमे गम्भीरे च कन्यकानां रहस्ये कन्याविश्रम्भणे कामसूत्रार्थदृष्ट्या कामशास्त्रोक्तार्थदर्शनप्रकारेण इयं दिक् इह रतिरहस्ये मयोक्ता कन्यासम्भोगक्रियायां मार्गो दर्शित इत्यर्थः ॥ १८ ॥

उपसंहारमाह

नात्यन्तमानुलोम्येन नचातिप्रतिलोमतः ।
सिद्धिं गच्छन्ति कन्यासु तस्मान्मध्येन साधयेत् ॥१९॥

नात्यन्तमिति । अत्यन्तमानुलोम्येनात्यन्तानुकूलभावेन, अतिप्रतिलोमतः अतिप्रातिलोम्येन वा कन्यासु सिद्धिं न गच्छन्ति तस्मान्मध्येन प्रकारेण साधयेत् ॥ १९ ॥

विश्रम्भणस्य फलं किमित्यत आह

आत्मनः प्रीतिजननं योषितां रागवर्द्धनम् ।
कन्याविश्रम्भणं वेत्ति यः स तासां प्रियो भवेत् ॥२०॥

आत्मनइति । यः कामी आत्मनः प्रीतिजननं, योषितां स्त्रीणां रागवर्द्धनं, कन्याविश्रम्भणं कन्यासौख्यं च वेत्ति स तासां कन्यानां प्रियो भवेत् ॥ २० ॥

सहसा वाप्युपक्रान्ता कन्याचित्तमविन्दता ।
भयं त्रासं समुद्वेगं सद्यो द्वेषं च गच्छति ॥२१॥

सहसेति । चित्तमविन्दता कान्ताचित्तमजानता पुंसा सह सहसा उपक्रान्ता संयोजिता कन्या भयं, त्रासं, भयं चिन्तामिति च पाठान्तरम्। उद्वेगं, द्वेषं च सद्यो गच्छति। ततो दुश्चारिणी स्यादिति भावः। अथवा जीवन एव उपेक्षावती भवेदित्यर्थः। दर्शनादेव यद्भवति तद्भयम्, अन्तर्जायमाना भीतिस्त्रासः, उद्वेगः पदार्थेषु विरक्तिः, द्वेषो विरोध इति भेदात् न पौनरुक्त्यम् ॥ २१ ॥

सा प्रीतियोगमप्राप्य तेनोद्वेगेन दूषिता ।
पुरुषद्वेषिणी वा स्याद्विद्विष्टा वा ततोऽन्यगा ॥२२॥

इति श्रीकोक्कोककृते रतिरहस्ये कन्याविश्रम्भणं
नामैकादशः परिच्छेदः ॥

सेति । सा कन्या प्रीतियोगमप्राप्य अलब्ध्वा तेनोद्वेगेन भयेन दूषिता सती पुरुषद्वेषिणी स्यात्, तस्मात् क्रमेण चित्तज्ञैरेव कन्या उपलालयेति सिद्धान्तः ॥ २२ ॥

इति श्रीकाञ्चीनाथकृतायां रतिरहस्यदीपिकायां
कन्याविश्रम्भणं नामैकादशः परिच्छेदः ॥



कन्या पुरुषेण संवृत्ता सती पुरुषे कथं प्रवर्तेतेत्यतो भार्याधिकारिकं
वक्तुं तत्र प्रथमं भार्याकर्त्तव्यमाह

युवतिरपि विहाय प्रातिकूल्यं स्वनाथं
वचनहृदयकायैः पूजयेदिष्टदैवम् ।
गृहवसतिमथासौ चिन्तयेद्भर्तृवाचा
प्रतिदिनमतिमृष्टं वेश्म कुर्यात्सुशोभम् ॥१॥

युवतिरिति । युवतिरपि प्रातिकूल्यं प्रातिकूलतां विहाय वचनहृदयकायैर्मनोवाक्कायकर्मभिः स्वनाथं स्वकान्तमिष्टदैवम् इष्टदेवतावत्

पूजयेत्। अथवा इष्टदा एवमिति पदद्वयम्। वचनहृदयकायैरिष्टदा भर्तुः प्रियदा सती एवं वक्ष्यमाणक्रमेण पूजयेदुपचरेदित्यर्थः। अथ सा युवतिः भर्तृवाचा भर्तृवाक्येन गृहवसतिं चिन्तयेत् गृहस्थिति-चिन्तां कुर्यात्, न स्वातन्त्र्येणेति भावः। प्रतिदिनं वेश्मातिमृष्टं गोमयाद्यभिमृष्टं सुशोभं शोभनं च कुर्यात्॥ १॥

गुरुषु सखिषु भृत्ये बन्धुवर्गे च भर्तु-
र्व्यपगतमदमाया वर्त्तयेत् स्वं यथार्हम्।
सितपरिमितवेषं केलिवीहारहेतोः
प्रचुरमरुणमाहुः प्रेयसो रञ्जनाय ॥२॥

गुर्विति। गुरुषु श्वशुरश्वश्र्वादिषु, सखिषु वयस्येषु, भृत्ये भृत्यजने, बन्धुवर्गे बन्धुजने च, सर्वत्र भर्तुरिति सम्बन्धः। व्यपगत-मदमाया मदं च मायां च त्यक्त्वा स्वं द्रव्यं यथार्हं वर्त्तयेत्। यस्य यदर्हं तस्य तद्द्यात्। सितपरिमितवेषं निर्मलमुज्ज्वलमिति यावत्। परिमितमनुल्वणं वेषं केलिवीहारहेतोः केलिहेतो, विहारहेतोश्च। तद्ज्ञा इति शेषः। वीवाहेत्यत्र घञन्तत्वात् उपसर्गस्य घञ्यमनुष्ये बहुलमिति दीर्घः। केलिः प्रियसङ्गमवेला, वीहारः सखीविनोदकालः, तत्र निर्मलमितप्रायवेषा भवेदित्यर्थः। प्रेयसः प्रियस्य रञ्जनार्थं प्रचु-रमरुणवेषमाहुः। प्रेयसः पत्युर्वेश्म शुचि सुसंमृष्टस्थानं विरचितवि-विधकुसुमं, श्लक्ष्णभूमितलं, हृद्यदर्शनं, त्रिषवणाचरितबलिकर्म्म पूजितदेवतायतनं च कुर्यात्। नह्यन्यतो गृहस्थानां चित्तग्राहकमस्ती-ति गोनर्दीयः॥ २॥

मरुवक, नवमाली, मालती, कुन्द, मल्ली,
तरुणसदृशपुष्पा वीरुधः सौरभाढ्याः।
सुमधुरफलवृक्षा मूलकालाबुभाण्ड-
प्रभृतिविटपिकादीनर्पयेद्वाटिकायाम् ॥३॥

मरुवकेति। मरुवक, नवमाली, मालती, कुन्द, मल्ली, तरुणस-दृशपुष्पाः मरुवकादिकोमलसमानकुसुमाः, सौरभाढ्याः, करुणत्यपि पाठः। अन्या वीरुधश्च वाटिकायां स्थापयेत्। मधुरफलवृक्षांश्च

स्थापयेत्, मूलकालाबुभाण्डप्रभृतीन् विटपकादीनप्यर्पयेत्। अलाबु स्थूलः। आदिपदात् कूष्माण्डकोशातकविकादयो गृह्यन्ते। भाण्डः कुन्दः ॥ ३ ॥

सकृदपि कुलटाभिर्योगिनीभिक्षुकाभि-
नटविटघटिताभिः संसृजेन्मौलिकाभिः।
रुचिरमिदममुष्मै पथ्यमेतन्नवेति
प्रतिदिनमपि भर्तुर्भोजनेच्छां विदध्यात् ॥४॥

सकृदिति। नटविटघटिताभिः नटैर्विटैश्च युक्ताभिः कुलटाभिः, स्वैरिणीभिर्योगिनीभिः, भिक्षुकीभिः, सकृदपि न संसृजेत् न सङ्गच्छेत्। मौलिकाभिर्मूलकारिणीभिर्मूलेन वशीकरणेन याः कर्म कुर्वन्ति ताभिश्च न संसृजेत्। एतद्देशीयपदम्। अथवा मूलेन तन्त्रप्रयोगेण चरन्तीभिः। अपिशब्दो नैरन्तर्यपरिहारार्थः। प्रतिदिनमिदममुष्मै पत्ये रुचिरं पथ्यं नवा अपथ्यमिति वा, भर्तुर्भोजनेच्छां विदध्यात् ॥ ४ ॥

वचनमपि निशम्यागच्छतो वेश्ममध्ये
तदुपकरणसज्जा संवसेदागतस्य।
चरणयुगलमस्य क्षालयेदात्मनाऽसौ
रहसि च परिबोध्यो वित्तनाशे प्रसक्तः ॥५॥

वचनामति। आगच्छतः पत्युः वचनं स्वरमपि निशम्य वेश्ममध्ये तदुपकरणसज्जा भर्तुरुपकरणम् उपचारार्हपदार्थः तस्य करणे सज्जा सक्ता सती संवसेत्। आगतस्य भर्तुश्चरणयुगलमात्मना स्वयमेवासौ युवतिः क्षालयेत्। वित्तनाशे प्रसक्तः असद्व्ययार्थमाथादधिकव्ययार्थ वा द्रव्यनाशोद्युक्तोऽसौ रहसि एकान्ते परिबोध्य एवं वित्तिनाशो न कार्य इति हेतुदृष्टान्तप्रदर्शनेन रहसि च कथयेत् प्रकाशे न कथयेदित्यर्थः। अतिव्यय,मसद्व्ययं च कुर्वाणं रहसि बोधयेत् ॥५॥

अनुमतिमुपलभ्याधिष्ठितान्यत्र यायात्-
च्छयनमनुविदध्याद्भर्तुरुत्थानमग्रे।

शयिनमपि न मुञ्चेन्नास्य मन्त्रं विभिन्द्याद्
व्रतनियमविधानं स्वेन चास्यानुगच्छेत् ॥६॥

अनुमतिमिति। विवाहयज्ञगमनगोष्ठीदेवताभिगमनादिषु पत्युरनुमतिम् उपलभ्य लब्ध्वाऽधिष्ठिता पत्युर्भगिनीप्रभृतिभिरधिष्ठिता सती अन्यत्र बहिर्यायात्। अथवा पादप्रक्षालनानन्तरमनुमतिमुपलभ्यान्यत्र गच्छेत्, भर्तुरनुशयनम् विदध्यात्, अग्रे उत्थानं च विदध्यात्। भर्तुः प्राक् स्वयं न शयीत, प्रातर्भर्तुरुत्थानात्पूर्वमेव प्रबुद्धा स्यादित्युक्तं स्यात्। तथाहि। पश्चात्संवेशनपूर्वमुत्थानमनवबोधेन च सुप्तस्यान्यत्र धर्माविपत्तेरिति स्मरणात्। शयितं सुप्तमपि कान्तं न मुञ्चे, आस्य मन्त्रं विभिन्द्यात्, अस्य भर्तुर्मन्त्रं न विभिन्द्यात् अन्यस्मै न प्रकाशयेत्। व्रतनियमविधानं स्वेन च पत्युरनुगच्छेत्। अस्य भर्तुः क्षेमसिद्ध्यै विविधकल्याणलाभाय स्नानं दानं देवतापूजादिकं कुर्यात्। विधानैरिति वा पाठः ॥ ६ ॥

क्वचिदपि निभृते वा द्वारि वा नैव तिष्ठे-
च्चिरमथ गिरमस्मिन् विप्रियां न प्रयच्छेत्।
न विरलजनदेशे मन्त्रयेन्निष्कुटे वा
न पुरुषमथ पश्येन्मन्त्रहेतुं विना च ॥७॥
सुघटितबहुभाण्डं काष्ठमृच्चर्मलोहैः
समयमभिसमीक्ष्य प्राददीताल्पमूल्यान्।
निभृतमसुलभानि स्थापयेद्भेषजानि
व्ययमवहितचित्ता चिन्तितायं च कुर्यात् ॥८॥

क्वचिदिति। क्वचिदपि निभृते निर्जने देशे, द्वारि वा नैव चिरन्तिष्ठेत्, अस्मै भर्त्रे विप्रियां गिरं क्वचिदपि न प्रयच्छेत् अप्रियवाक्यं न ब्रूयात्, विरलजनदेशे निष्कुटे कुटीरे वा न मन्त्रयेत्, अन्येन पुरुषेण सह भाषणं न कुर्यात्। मन्त्रहेतुं विना परपुरुषमपि न पश्येत्। समयमभिसमीक्ष्य काष्ठचर्म्ममृल्लोहैः सुघटितमृदुभाण्डमल्पमूल्येन प्राप्तं प्राददीत गृह्णीयात्, । भाण्डशब्देन लवणस्नेहादीनामिह संग्रहः।

असुलभानि अपेक्षितकाले हठादेव न लभ्यानि भेषजानि वचा, हरीतकी, हिङ्गु, मरीचं, अजमोदा, लशुनादीनि निभृतं स्थापयेत्, गृहे बीजार्थं गुप्तं निदध्यात्। व्ययमवहितचित्ता सती चिन्तिताऽऽयम् आयचिन्तां कृत्वा विदध्यात्। यदुक्तं नीतिशास्त्रे

इदमेव हि पाण्डित्यमियमेव विदग्धता।
अयमेव परो धर्मो ह्यायान्नाधिको व्ययः॥
आयात्पादं व्ययं कुर्यात्तृतीयं चार्धमेव वा।
सर्वलोपं न कुर्वीत यदि जीवितुमिच्छति॥

इति वचनात्, आयो द्रव्यागमनम्॥ ७॥

तृणतुषकणकाष्ठाङ्गारभस्मोपयोगं
परिजनविनियोगं कर्मणः प्रत्यवेक्षाम्।
प्रियतमपरिभुक्तत्यक्तवस्त्रादिरक्षां
शुचिभिरवसरे तैर्माननं भृत्यवर्गे॥८॥

तृणेति। तृणतुषकणकाष्ठाङ्गारभस्मोपयोगम्, तृणं पलालघासवीरणप्रायम्, तुषस्तण्डुलत्वक्, कणः क्षुद्रतण्डुलः, काष्ठान्येधांसि, अङ्गाराण्युल्मुकानि, भस्म प्रसिद्धम्। तृणादीनामुपयोगं विनियोगं च कुर्वीत। परिजनविनियोगं तत्तत्कर्माणि परिजनं नियुञ्जीत, कर्मणः कार्यस्य प्रत्यवेक्षां परिजनकृतकार्यपरामर्शं च कुर्वीत, प्रियतमेन परिभुक्तत्यक्तवस्त्रादिरक्षां कुर्वीत, यानि वस्त्रादीनि प्रियतमोपभुक्तानि त्यक्तानि तानि रक्षेत् अवसरे प्रसादसमये प्राप्ते शुचिभिस्तैर्वस्त्रादिभिः भृत्यवर्गं मानयेत्। भृत्यवर्गाय तानि शुचीनि कृत्वा दातव्यानि॥८॥

परिजनपरिरक्षां वाहचिन्तां पशूनां
कपिपिकशुकशारीसारसादेरवेक्षाम्।
गुरुषु परवशत्वं तेषु वाचंयमत्वं
स्फुटहसितनिवृत्तिं शीलवृत्तिं च कुर्यात्॥९॥

परिजनेति। परिजनपरिरक्षां, वाहचिन्तां, पशूनामवेक्षां गोमहिषादीनामवेक्षां, कपिर्वानरः, पिकः कोकिलः, शुकः कीरः, शारी

शारिका, सारसः पुष्कराह्व एतेषामवेक्षां च कुर्यात्, गुरुषु परवशत्वं स्वातन्त्र्यनिवृत्तिं, तेषु गुरुषु विषये वाचंयमत्वं यावदर्थसम्भाषणमित्यर्थः। स्फुटहसितनिवृत्तिं स्फुटहासनिवृत्तिं, हासेत्युपलक्षणम्। तेन जृम्भाकासनिष्ठीवनादि गृह्यते। शीलवृत्तिं च कुर्यात्। शीलवृत्तिः सुस्वभावता सदाचारश्चेत्यर्थः॥ ६॥

प्रणयसहचरीभिस्तुल्यरूपां सपत्नीं
निजमिव तदपत्यं दर्शयेदप्रमत्ता।
गतवति दयिते तु क्वापि माङ्गल्यमात्रा-
ण्युपचितगुरुविप्रा धारयेन्मण्डनानि॥१०॥

प्रणयेति। सपत्नीं प्रणयसहचरीभिः तुल्यरूपां समानां दर्शयेत्, तदपत्यं सपत्न्या अपत्यं निजं स्वकीयमिव दर्शयेत्, अप्रमत्ता प्रमादिनी न भवेत्, सर्वत्र जागरूका भवेदित्यर्थः। दयिते प्रिये क्वापि कार्यवशात् गतवति सति उपचितगुरुविप्रा गुरुविप्राराधनपरा माङ्गल्यमात्राणि मण्डनानि धारयेत्॥ १०॥

उपगुरु शयनं च स्वल्पतां च व्ययस्य
प्रतिदिनमपि कुर्यादस्य वार्त्तानुसारम्।
अनवसितविधानेप्यस्य निर्वाहयत्नं
व्रतनियमविधिं च क्षेमसिद्ध्यै विदध्यात्॥११॥

उपगुर्विति। उपगुरु गुरुजनसमीपे शयनं च कुर्वीत, व्ययस्य स्वल्पतां च कुर्वीत, प्रतिदिनमस्य भर्त्तुर्वार्त्तानुसारं कुर्यात् वार्त्तामनुसंदधीत, क्व वास्ते कथं वास्तइत्यागन्तुकान् प्रति पृच्छन्ती स्यादित्यर्थः। अस्य कान्तस्य अनवसितविधाने असमाप्तविधाने प्रारब्धकर्म्मणि निर्वाहयत्नं कुर्वीत, तस्य साधनं प्रति यत्नं कुर्यात्, व्रतनियमविधिं च क्षेमसिद्ध्यै विदध्यात् अस्य भर्तुः क्षेमसिद्ध्यै व्रतनियमविधिं कुर्यात्॥ ११॥

स्वजनगृहमुपेयात् प्रक्रमे साद्वितीया
न चिरमिह वसेच्च प्रेयसि त्वागते सा।

अविकृतवपुषं स्वं दर्शयेदुत्सवादौ
प्रथममपि विदध्यादाहरेच्चोपहारम् ॥ १२ ॥

स्वजनेति । प्रक्रमे प्रस्तुते कर्मणि स्वजनगृहं बन्धुगृहं सद्वितीया ससहायोपेयात्, नायकपरिचारिकया सह गच्छेत्, चिरमिह स्वजनगृहे न वसेत्, प्रेयसि कान्ते आगते सति अविकृतदेहा प्रवासवेषधारिणी प्रथमं दर्शनं विदध्यात्, अथ उपहारमाहरेच्च बलिं दद्यात् । अथवा अविकृतवपुषि कान्ते समागते सति स्वमात्मानं प्रथमं दर्शयेत् उत्सवादावुपहारं विदध्यात् कुर्यादाहरेच्च ॥ १२ ॥

युग्मम्

यदि बहुयुवतिः स्यात्पुरुषः साम्यवृत्ति-
र्निपुणमतिरुपेयान्न क्षमेतापराधम् ।
वपुषि विकृतिमेकां सम्प्रयोगे रहस्यं
वहति वदति यच्च प्रेमरोषेण किञ्चित् ॥ १३ ॥

यदीति । पुरुषः यदि बहुयुवतिः स्यात् बह्वयो युवतयो यस्य सः बहुयुवतिर्यदि भवेत् तदा साम्यवृत्तिः स्यात्, निपुणमतिर्निपुणबुद्धिस्तमुपेयात्, अथवा निपुणमतिः पुरुष इति पाठः । अपराधं न क्षमेत अपराधं तदा न क्षमेत्, वपुषि शरीरे एकां विकृतिं वैकृतं च वहति संप्रयोगे रतौ यच्च वहति रहस्यं वा यच्च वदतीत्यर्थः ॥ १३ ॥

कथमपि च तदन्यां श्रावयेन्नो कदाचि-
त्प्रसरमपि सपत्नीगोचरे क्वापि दद्यात् ।
यदि निगदति दोषं का चिदेका परस्या
रहसि च निपुणोक्तैर्दूषणैः सैव योज्या ॥
प्रमदवनविहारप्रेमसंमानदानैर्हृदयमिह यथार्हं रञ्जयेद्वल्लभानाम् ॥ १४ ॥

इति श्रीकोक्कोककृते रतिरहस्ये भार्याधिकारो
नाम द्वादशः परिच्छेदः ॥



कथमिति। तदन्यां वा किञ्चिदपि न श्रावयेत्, कदाचित् कापि सपत्नीगोचरे सपत्नीसंनिधौ प्रसरमपि न विदध्यात्। एका काचित्सपत्नी अपरस्या दोषं यदि निगदति वदति रहसि निपुणोक्तैर्निपुणमुपन्यस्तैर्दूषणैस्त्वमेवापराधिनीति सैव योज्या, प्रमदवनविहारप्रेमसंमानदानैर्वल्लभानां हृदयं यथार्हं रञ्जयेत्, उद्यानविहारेण, प्रेम्णा, संमानेन वस्त्राभरणदानेन वल्लभानां हृदयं रञ्जयेदित्यर्थः॥ १४॥

इति श्रीकाञ्चीनाथविरचितायां रतिरहस्यदीपिकायां
भार्याधिकारो नाम द्वादशः परिच्छेदः॥

———→○←———

अथ परप्रमदाभियोगः कथ्यते।

भार्याधिकारिकमिदं गदितं समासा-
द्वक्ष्यामि सम्प्रति परप्रमदाभियोगम्।
आयुर्यशोरिपुरधर्मसुहृत् स चायं
कार्यो दशाविषयहेतुवशान्न कामात्॥ १॥

भार्येति। इदं भार्याधिकारिकं प्रकरणं समासात् संक्षेपाद् गदितमुक्तम्। संप्रति परप्रमदाभियोगं वक्ष्यामि, आयुर्यशोरिपुः आयुषो, यशसश्च रिपुः नाशक इत्यर्थः। अधर्मस्य सुहृत् पापस्य मित्रं, सचायं परप्रमदाभियोगः दशाविषयहेतुवशात्कार्यः, न कामात् परदारान् दृष्ट्वा इच्छामात्रेण गमनं न कार्यं, किंतु वक्ष्यमाणावस्थाविषये कार्यः, अन्यदापि हेतुवशात्कार्यम्, उभयमपि व्यक्तीकरिष्यति॥१॥

तत्र प्रथममाचार्योक्ता दशावस्था आह

नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोथ सङ्कल्पः।
निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः॥ २॥
उन्मादो मूर्छा मृतिरित्येताः स्मरदशा दशैव स्युः॥
तास्वारोहतिमदने यायात्परयोषितं स्वरक्षायै॥ ३॥

नयनेति। प्रथमं नयनप्रीतिः, ततः चित्तासंङ्गः, अथ सङ्कल्पः, निद्राच्छेदः, तनुता, विषयनिवृत्तिः, त्रपानाशः, उन्मादः, मूर्छा, मृति-

रित्येताः स्मरदशा दशैव स्युः। सङ्कल्पो नाम मानसं कर्म। तनुता कार्श्यं, विषयनिवृत्तिः विषयाः शब्दादयः तेभ्यो निवृत्तिर्नामार्थद्वेषः। उन्मादश्चित्तविभ्रमः, मूर्च्छा नष्टचेष्टता, अन्येतु प्रसिद्धाः। तासु दशासु मदने आरोहति सति परयोषितं स्वरक्षायै प्राणरक्षार्थं यायाद् गच्छेत् ॥ २ ॥ ३ ॥

पुनर्दाराः पुनर्वित्तं पुनः क्षेत्रं पुनः सुतः।
पुनः श्रेयस्करं कर्म न शरीरं पुनः पुनः ॥ ४ ॥

पुनरिति। दाराः अबलाः, वित्तं धनं, क्षेत्रं, सुतः पुत्रः, श्रेयस्करं कल्याणकरं कर्म, एते पूर्वोक्ताः पुनः पुनः वारंवारं भवन्तीत्यर्थः। किन्तु शरीरं पुनः पुनः न भवतीत्यर्थः। अतस्सर्वत एवात्मानं गोपायेदित्यर्थः ॥ ४ ॥

अथ विवर्ज्यस्थानमाह।

असङ्गृहीतभार्यां च ब्रह्मस्त्रीं यश्च गच्छति।
सूतकं सततं तस्य ब्रह्महत्या दिनेदिने ॥ ५ ॥

असंगृहीतेति। असंगृहीतभार्या अविवाहिता स्त्री, ब्रह्मस्त्री च ब्राह्मणाबला च एतयोर्गच्छतो नरस्य सततं सर्वदा सूतकं, दिनेदिने प्रतिदिनं ब्रह्महत्या च भवति ॥ ५ ॥

अद्विजभार्याविषयः सापि न दुष्टैव पञ्चनरभुक्ता।
श्रोत्रियसखिसम्बन्धिक्षितिपतिभार्या निषिद्धैव ॥ ६ ॥

अद्विजेति। अद्विजभार्याविषयः न विद्यते द्विजभार्या विषयो यस्य सः तथोक्तः, द्विजभार्या परिहार्या, सापि द्विजभार्या पञ्चनरभुक्ता पञ्चभिर्नरैरुपभुक्ता न दुष्टा स्वीकार्या इत्यर्थः। अन्यतोपि बहुशः खण्डितचरित्रा याः तासु वेश्यायामिव गमनं न धर्मपीडां करिष्यति, पुनर्भूरियमनन्यपूर्वा अन्येन वाऽवरुद्धा नात्र शङ्कास्ति न परलोकभयमस्ति सुखं सकलं स्यादिति वात्स्यायनः। श्रोत्रियः अनूचानः, सखा वयस्यः, सम्बन्धी विवाहबन्धुः, क्षितिपतिः एतेषां भार्यासु पञ्चनरभुक्तास्वपि अभियोगो न कार्यः ॥ ६ ॥

पतिता सखी कुमारी प्रव्रजिता रोगिणी प्रकटा ।
उन्मत्ता दुर्गन्धा वृद्धप्राया रहस्यभित्कपिला ॥ ७ ॥
अतिकृष्णा निक्षिप्ता कदाचिदेता न गम्याः स्युः ।
विषयेऽगम्येपि बुधाः कारणतः पारदारिकं प्राहुः ॥८॥

पतितेति । पतिता हीनजातिः, कुमारी अनृतुमती, प्रव्रजिता गृहीतव्रता, रोगिणी कुष्ठादिरोगयुक्ता, प्रकटा स्वैरिणी, उन्मत्ता उन्मादवती, दुर्गन्धा देहे दौर्गन्ध्यवती, वृद्धप्राया वृद्धा, रहस्यभित् रहस्यप्रकाशिनी, कपिला कपिलाङ्गी, अतिकृष्णाङ्गी, निक्षिप्ता अन्यस्वीकृता, कदाचिदेता न गम्याः स्युः । अगम्ये विषये ऽपि अगम्यस्थानेपि बुधाः पण्डिताः कारणतः हेतुवशात् "हेतुर्ना कारणं बीज"-मित्यमरः। पारदारिकं प्राहुः। तदेव परिग्रहणं स्वकार्यकरणमाहुः॥७॥८॥

मद्वैरिसङ्गतोस्याः पतिरियमस्मान्निवर्त्तयेदेनम् ।
मत्संसृष्टा बलिनं प्रकृतिं वा मां जिघांसुमानेत्री ॥ ६ ॥

मद्वैरीति । अस्याः पतिः मद्वैरिसङ्गतः मम वैरिणा सङ्गतः । एनम् इयम् अस्मात् मम वैरिसङ्गान्निवर्त्तयेत् निवृत्तं कुर्यात् । मत्संसृष्टा मया सङ्गता सती मां जिघांसुं मम शत्रुं बलिनं प्रकृतिम् उपशमनमानेत्री अस्मदुपरि अकृतकोपं करिष्यतीति वा ॥ ६ ॥

पुनरपि गमनकारणमाह ।

गमनमनपायमस्यां मम निःसारस्य वृत्तिहेतुर्वा ।
मर्मज्ञा मयि रक्ता विमुखं मां दूषयेदथवा ॥ १० ॥

गमनमिति । अस्यां नायिकायां गमनमनपायं निर्बाधम्, अथवा निःसारस्य दरिद्रस्य मम वृत्तिहेतुरिति कार्यं, तस्याः सकाशादर्थजिघृक्षया गन्तव्यम्। अथवा मर्मज्ञा अस्मन्मर्मज्ञानवती, इयं मयि रक्ता, पराङ्मुखं सुरतपराङ्मुखं मां दूषयेत् । अस्मन्मर्म प्रकाशयति मर्माणि प्रकाशिते चात्मबाधा भवतीति । तत्परिहारार्थं गन्तव्यमिति भावः ॥ १० ॥

मामभिरिरंसुरयामिति मिथ्यादोषेण कपटघटितेन ।
कर्त्तासि मित्रकार्यं महदनया वा समागम्य ॥११॥

मामभीति । अयं कितवो मामभिरिरंसुः रन्तुमिच्छुः इति कपट-घटितेन मिथ्याव्याजारोपितेन दोषेण मां दूषयेत्, आत्मना प्रार्थिते मयि सुरतपराङ्मुखे सति मदुपरि मिथ्यादोषमुत्पाद्य दूषयेदिति वा । अनया समागम्य समागमं कृत्वा महदधिकं मित्रकार्यं कर्त्तास्मि, वा अनया सह सङ्गमं कृत्वा अमित्रप्रतिघातमन्यद्वा दुःष्प्रापं कार्यं करिष्यामीति विचार्य गन्तव्यम् इति ॥ ११ ॥

इत्युपलक्षणमित्थं कारणमालोचयन्न रागतो यायात् ।
कारणविचारणासहमथवा स्वं वीक्ष्य मन्मथोन्मथितम् ॥ १२ ॥

इतीति । इत्युक्तप्रकारेण उपलक्षणमित्थंकारणमालोचयन् उक्तानि कारणानि अन्यानि वाऽऽवश्यकानि कारणान्यालोचयन् नरः कामी यायात् न रागतः, स्वं कारणविचारणासहं कारणानां विचारणस्य असहत्वमालोचयन् मन्मथोन्मथितं मन्मथेन उन्मथितं चरमामवस्थां प्रापितं वीक्ष्य वा गन्तव्यम् ॥ १२ ॥

जिगमिषुभिः परदारान् सिद्ध्यायतिवृत्त्यपायपरिहाराः ।
प्रागेव चिन्तनीयाः लब्धप्रसरो हि दुर्जयो मदनः ॥ १३ ॥

जिगमिषुभिरिति । परदारान् जिगमिषुभिः गन्तुमिच्छुभिःकामुकैः सिद्ध्यायतिवृत्त्यपायपरिहाराः सिद्धिश्च, आयतिश्च, वृत्तिश्च, अपायपरिहारश्च एतेषां समाहारः सिद्धिरियं सिद्धा, आयतिरर्थागमः, वृत्तिर्जीवनं, अपायपरिहारः ऐहिकस्य, आमुष्मिकस्य वा अपायस्य परिहारः एते प्रागेव गमनात् पूर्वमेव चिन्तनीयाः, यतः लब्धप्रसरो लब्धावकाशो मदनः दुर्जयो निवारयितुमशक्यः ॥ १३ ॥

सप्रत्यवायदुर्लभ निषेधविषयश्च यो विषयः ।
कामः स्वभाववामः प्रसरति तत्रैव दुर्वारः ॥ १४ ॥

सइति । यो विषयः विषयशब्देन स्थानमुच्यते, परपरिग्रह इति यावत् । सप्रत्यवायदुर्लभनिषेधविषयः सप्रत्यवायस्सापायः, दुर्लभो लब्धुमशक्यः, निषेधविषयो निषेधस्थानं श्रोत्रियादीनां कलत्रं पतितासखीत्यादि च निषिद्धं तत्रैव निषिद्धस्थाने स्वभाववामः प्रकृत्या च क्रूरः दुर्वारः वारयितुमशक्यः कामः प्रसरति चेष्टां करोति ॥१४॥

उज्ज्वलवपुषं पुरुषं कामयते स्त्री नरोपि तां दृष्ट्वा।
अनयोरेष विशेषः स्त्री काङ्क्षति धर्मनिरपेक्षा ॥ १५ ॥

उज्ज्वलेति। उज्ज्वलवपुषमुज्ज्वलवेषं पुरुषं स्त्री कामयते, नरोपि तां दृष्ट्वा उज्ज्वलवेषां कान्तां निरीक्ष्य कामयते, अनयो स्त्रीपुंसयोरेष विशेषः अयं विशेषः, स्त्री धर्मनिरपेक्षा काङ्क्षति धर्मपराङ्मुखी उज्ज्वलं पुरुषं काङ्क्षति। पुरुषस्तु धर्ममपेक्ष्य काङ्क्षतीति भावः। तथोक्तं

सुन्दरं पुरुषं दृष्ट्वा भ्रातरं पितरं सुतम्।
योनिर्द्रवति नारीणामिति ॥ १५ ॥

अभ्यर्थिता च पुंसा सहसा न स्वीकरोति सहजेन।
सुकृतसमयाद्यपेक्षी प्रवर्त्तते वा नवा पुरुषः ॥ १६ ॥

अभ्यर्थितेति। पुंसा पुरुषेणाभ्यर्थिता सहजेन स्वभावेन सहसा न स्वीकरोति पुरुषेण प्रार्थितापि न मन्यते, स्त्रीणामयं स्वभावः। धर्ममनादृत्य स्वयं कामयन्ते पुरुषैश्च प्रार्थिता नतु मन्यन्ते। पुरुषस्तु सुकृतसमयाद्यपेक्षी धर्मापेक्षी समयाद्यपेक्षी च आयसमयादीनेव वीक्षमाणः कामयमानोपि प्रवर्त्तते वा नवा ॥ १६ ॥

सुलभामवमनुतेऽसौ कामयते दुर्लभां मृषाभियुङ्क्ते च।
इति नरनारीशीलं नार्या व्यावृत्तिकारणं वक्ष्ये ॥ १७ ॥

सुलभामिति। अपितु पुरुषः सुलभां स्त्रियमवमनुते यां काश्चित्सुलभमात्मानं कामयमानां नेच्छति, दुर्लभां स्त्रियं कामयते, मृषाभियुङ्क्ते, मिथ्याभियोगं करोति च। इति पूर्वोक्तेन प्रकारेण नरनार्योः शीलमुक्तं व्यापार उक्तः। इतः परं नार्या व्यावृत्तिकारणं व्यभिचारं प्रति व्यावर्त्तनकारणं वक्ष्ये कथयिष्यामि ॥ १७ ॥

भृशमनुरागः पत्यावपत्यवात्सल्यमतिवयस्त्वं च।
व्यतिकरनिर्वेदित्वं धर्मापेक्षापि कस्याश्चित् ॥ १८ ॥

भृशमिति। पत्यौ कान्ते भृशमनुरागः अधिका मैत्री, अपत्यवात्सल्यम् अपत्यस्नेहः, अतिवयस्त्वं वृद्धभावश्च, व्यतिकरनिर्वेदित्वं व्यतिकरो व्यासङ्गः तेन दुःखितत्वम्, अथवा व्यतिकरे संभो-

गविषये निर्वेदित्वं निर्विण्णता । अचित्तज्ञेनोपक्रान्ता कन्या पुरुषद्वेषिणी वा स्यादित्युक्तत्वात् । कस्याश्चित्स्त्रिया धर्म्मापेक्षा च न सर्वत्र ॥ १८ ॥

भर्त्तुरविरह इत्यारभ्य स्त्रीणामिच्छायां सत्यामपि
व्यावृत्तिकारणानि कथयन्ति ।

भर्त्तुरविरहः स्वात्मनि दोषज्ञानं यियासुरन्यया रक्तः ।
इयमस्य मन्निमित्ता मा भूत्पीडेत्यसामर्थ्यम् ॥ १९ ॥

भर्त्तुरिति । पत्युर्विरहाभावः, स्वात्मनि आत्मशरीरे रोगादिजनितस्य अङ्गवैकल्यादिजनितस्य वा दोषस्य ज्ञानम् । एवंकृते दोषोऽस्तीति, यियासुः यातुमिच्छुः जार इत्यर्थः । अन्यया नार्या रक्तः उत्सुकः, अयमन्यस्यां सक्तः मां वृथाभियुङ्क्ते इत्यर्थः । अस्य जारस्य मन्निमित्ता आत्मसङ्गमाज्जाता इयं पीडा रक्षिभ्यो मा भूत् इत्यसामर्थ्यम् असमर्थता ॥ १९ ॥

दुर्लक्ष्यो नागर इति सुहृदिति पत्या प्रयुक्त इति गरिमा ।
इङ्गितमूढः पलितो नीचः शुष्काभियोग्यदेशकालज्ञः ॥२०॥
इति लघिमा सुहृदर्पितभावोऽचित्तज्ञ इति खेदः ।
तेजस्व्यनिभृतभावो ज्ञाता ज्ञात्युज्झिता भवेयमिति भीः॥२१॥

दुर्लक्ष्य इति । असौ जारो दुर्लक्ष्यः एवंविध इति ज्ञातुमशक्यः, नागरः नागरिकः, सुहृदिति ममायं मित्रमिति पत्या प्रयुक्तो, मद्भर्त्रा परीक्षार्थं प्रयुक्त इति । अथवा पत्या सहैव वर्तमान इति एतैर्गरिमा गौरवं जायते, इङ्गितमूढः भावज्ञो न भवति, पलितकेशः वृद्ध इत्यर्थः । नीचः खलः, शुष्काभियोगी वृथा प्रेरकः, अदेशकालज्ञः देशकालज्ञो न भवति इति लाघिमा लघुत्वं जायते ॥ सुहृदर्पितभावः सुहृदि वयस्ये अर्पितभावो मां स्वसुहृत्पत्नीं नेच्छतीति खेदः, अचित्तज्ञो ममाभिप्रायं न जानात्यसौ वक्रप्रकृतिरिति च खेदः । तेजस्वी प्रभुप्रायः, अनिभृतभावश्चञ्चलभावः, ज्ञाता बन्धुजनादिज्ञातव्यभिचारा सती अहं ज्ञात्युज्झिता ज्ञातिभिर्बन्धुभिरुज्झिता भवेयमिति भीति ॥ २० ॥ २१ ॥

इच्छायामपि सत्यां स्त्रीणां व्यावृत्तिकारणान्याहुः ।
प्रथमोक्तपञ्चकारणवारणमनुरागवर्द्धनं कार्यम् ॥ २२ ॥

इच्छायामिति । इच्छायां व्यभिचारेच्छायां सत्यां विद्यमानायामपि स्त्रीणामेतानि व्यावृत्तिकारणान्याहुः । असामर्थ्यगरिमलघिमखेदभीतीनां मध्ये आद्यं कारणत्रयं पुरुषे, इतरद्वयं वनितायां बोद्धव्यम् । प्रथमोक्तपञ्चकारणवारणं पूर्वोक्तानां पञ्चकारणानां वारणं यथा तथा अनुरागवर्द्धनं च कार्यम् ॥ २२ ॥
तदेव निवारणमाह ।

कार्यमुपायव्यञ्जनमशक्तिहेतौ, यथायोग्यम् ।
अतिपरिचयतो गरिमा, लघिमा वैदग्ध्यभोगयोः ख्यात्या ।
खेदः प्रणतेस्त्रासोप्याश्वासनतो निवर्त्याः स्युः ॥२३ ॥

कार्यमिति । अशक्तिहेतौ स्वसामर्थ्ये प्रथमे व्यावृत्तिकारणे उपायस्य व्यञ्जनं प्रकाशनं यथायोग्यं युक्त्यनुसारेण कार्यं कर्तव्यम् । स्वसामर्थ्यप्रकटनं कृत्वा स्त्रिया मनसि विश्वासमुत्पाद्य प्रथमकारणवारणं कुर्यादित्यर्थः । अतिपरिचयतः अतिपरिचयात् गरिमा त्याज्यः । अतिपरिचये क्रियमाणे गौरवं नश्यति । अतिपरिचयादवज्ञा भवति विशिष्टेपि पुरुषे दर्शनात् । वैदग्ध्यभोगयोः विदग्धत्वे भोगे च विषये लघिमा त्याज्यः, अयं विदग्धः, अयं भोगीति यदा स्त्रियो मनसि प्रतीतिर्भवति तदा वैदग्ध्यभोगप्रकाशनेन लाघवं त्याजनीयम्, प्रणतेर्नमस्कारात् खेदो निवर्त्यः, आश्वासनतो भयम् आश्वासनेन त्रासो निवर्त्यः, एवमेते कारणभेदा निवर्त्यास्स्युरिति सम्बन्धः ॥ २३ ॥
इदानीं स्त्रीषु सिद्धान् पुरुषान् कथयति

शूरः समुचितभाषी रतितन्त्रज्ञः प्रियस्य कर्त्ता च ।
प्रेक्षणकारी साहसरसिकः प्रोद्दामयौवनश्रीकः ॥ २४ ॥

शूर इति । शूरो विक्रान्तः, समुचितभाषी समयोचितभाषाचतुरः, रतितन्त्रज्ञः कामकलाप्रवीणः, प्रियस्य इष्टस्य कर्मणः कर्त्ता, प्रेक्षणकारी प्रेक्षणकर्ता, विमृश्यकारीति यावत् । साहसरसिकः साहसवान्,रसिकः, प्रोद्दामयौवनश्रीकः अधिकयौवनः, अधिकश्रीकश्च ॥२४॥

आबाल्यजातसख्यः क्रीडनकृत्यादिना जातविश्वासः ।
आख्यानशिल्पकुशलः कस्य चिदन्यस्य कृतदूत्यः ॥२५॥

आबाल्येति । क्रीडनकृत्यादिना क्रीडनकर्म्मादिना जातविश्वासः विश्वासस्थानभूतः, आबाल्यात् बाल्यात् प्रभृति जातसख्यः, आख्यानशिल्पकुशलः आख्याने शिल्पकर्म्मणि च कुशलः, अन्यस्य कस्यचित्कृतदूतभावः ॥ २५ ॥

अप्यगुणो मर्मज्ञः सख्या प्रच्छन्नसंसृष्टः ।
उत्तमया संभुक्तः सुभगः ख्यातान्वयश्च जामाता ॥ २६ ॥

अप्यगुणइति । अगुणोपि शौर्यादिषु गुणेषु न कश्चिदपि गुणोऽस्ति तथापि मर्मज्ञः अस्या मर्म जानाति चेत् सिद्धो भवतीत्यर्थः । सख्या प्रच्छन्नसंस्पृष्टः प्रच्छन्नवेषधारी तस्याः सख्या सह आगत्य प्रच्छन्नोपभुक्तः, उत्तमया उत्तमाङ्गनया सम्भुक्तः कृतोपभोगः, सुभगः सौभाग्यवान्, ख्यातान्वयः प्रसिद्धवंशजः, जामाता नच परः ॥२६॥

परिचारः स्मरशीलः तादृक्तः प्रातिवेश्योपि ।
धात्रेयिकापरिग्रह उद्योगत्यागशीलश्च ॥ २७ ॥

परिचारइति । परिचारः परिचारकः, स्मरशीलः परिचारकोपि तादृक्तः कामशील इत्यर्थः । प्रातिवेश्यः स्वगृहस्य सर्वदा समीपस्थः । धात्रेयिकापरिग्रहः धात्रेयिकायाः धात्रीसुतायाः परिग्रहो यस्य स तथोक्तः । धात्रेयिका धात्रीसुता, उद्योगत्यागशीलः उद्योगशीलः त्यागशीलश्च ॥ २७ ॥

प्रेक्षणरसिको वृष इति विख्यातः सद्गुणाधिकः पत्युः ।
अभिमतमहार्हवेशाचारः सिद्धा इमे नराः स्त्रीषु ॥ २८ ॥

प्रेक्षणेति । प्रेक्षणरसिकः, प्रेक्षणरसज्ञः, वृषजातिरिति विख्यातः प्रसिद्धः, पत्युः स्वभर्त्तुः सद्गुणैर्विद्यारूपादिभिर्गुणैरधिकः, अभिमतौ इष्टौ महार्हौ वेषाचारौ यस्य स तथोक्तः, इमे नराः शूरइत्यादिपूर्वोक्तविशेषणयुक्ताः पुरुषाः स्त्रीषु सिद्धाः । हिशब्दः अभियोगमात्रसिद्धा इति द्योतनार्थः ॥ २८ ॥

अधुना अयत्नसाध्या योषितः कथयति ।

द्वारावस्थितिशीला दृष्टा पार्श्वे विलोकते या च ।
रमणद्विट् दुर्भगा वा निरपत्या निरपराधपरिभूता ॥ २९ ॥

द्वारावस्थितीति । द्वारावस्थितिशीला द्वारदेशवर्त्तिनी दृष्टा सती नायकेन पार्श्वे या विलोकते, या रमणद्विट् कान्तद्वेषिणी, दुर्भगा वा भर्तृपरित्यक्ता वा, या निःसन्ततिः पुमपत्यशून्येत्यर्थः । अनपराध-परिभूता अपराधे अविद्यमानेपि पतिश्वश्रूसपत्नीप्रभृतिभिः परिभूता धिक्कृता ॥ २९ ॥

लङ्घितलज्जा वन्ध्या गोष्ठीशीला मृतापत्या ।
परिहरति नापराधेप्यभिभूता वा वृथा सपत्नीभिः ॥३०॥

लङ्घितेति । लङ्घितलज्जा त्यक्तलज्जा, वन्ध्या निष्फला, गोष्ठी-शीला स्वगृहे सखीगृहे वा गोष्ठीकारिणी, मृतापत्या मृतपुत्रा, या न परिहरति अभियोगमिच्छति, अपराधे स्वकृते अपराधे विद्यमाने सति सपत्नीभिरभिभूता, वृथा सपत्नीभिरभिभूत वा ॥ ३० ॥

बाला मृतपतिका या बहूपभोगा दरिद्रा च ।
न्यूनपतिर्बहुमाना मूढधवोद्वेगिनी कलाकुशला ॥३१॥

बालेति । बाला बालाख्या, मृतपतिका मृतभर्ता, बाला सती मृतपतिरिति यावत् । बहूपभोगा बहव उपभोगाःयस्याः सा उपभोग-बाहुल्या, अथवा बहूपभोगा अल्पोपभोगा, विभाषा सुपो बहुच् पुरस्तादित्यल्पार्थे बहुच्प्रत्ययः । दरिद्रा दारिद्र्यादर्थलोभादभियोगं सहते, न्यूनपतिः हीनपतिः, बहुमाना अधिकाहङ्कारा, मूढपतिः, उद्वेगिनी भर्त्तुः उद्वेगकारिणी, कलाकुशला नृत्यगीतादिकामकला-प्रवीणा ॥ ३१ ॥

ज्येष्ठा बहुदेवरका प्रोषितभर्ताऽधरीकृता समानाभिः ।
नित्यं ज्ञातिकुलस्थितिरीर्ष्यालुः पतिसमानशीला च ॥३२॥

ज्येष्ठेति । ज्येष्ठस्य भार्या, बहुदेवरका बहवः देवरा यस्याः सा बहुदेवरका बहुभर्तृसहोदरा, प्रोषितभर्ता प्रोषितपतिका, समानाभिः गृहिणीभिः अधरीकृता, नित्यं ज्ञातिकुलस्थितिः ज्ञातिकुले पितृम-न्दिरे स्थितिर्यस्याः सा तथोक्ता, ईर्ष्यालुः भर्त्रादिबन्धुकुले ईर्ष्या-

युक्ता, पतिसमानशीला च। अत्र पतिशब्देन उपपतिरुच्यते, तेन समानशीला उपपतिना सन्ततसहवासात् तदभियोगं सहत इति यावत्। अथवा पतिर्भर्ता भर्तैव व्यभिचरति चेत् स्वयमपि व्यभिचरतीत्यर्थः ॥ ३२ ॥

कन्याकाले यत्नाद्वरिता व्यूढा कुतोपि कारणान्नैव।
या यौवनेऽभियुक्ता प्रकृतिस्निग्धा च या यस्मिन् ॥३३॥

कन्येति। कन्याकाले यत्नाद्वरिता नायकेन वृता कुतोऽपि कारणतः न व्यूढा तदानीं न लब्धा साप्ययत्नसाध्या, या यौवने अभियुक्ता प्रार्थिता सती कुतोपि हेतोस्तदा विघ्ने नत्प्रार्थिता भूत्वा काले व्यभिचरतीत्यर्थः। या यस्मिन्नभियोक्तरि प्रकृतिस्निग्धा स्वभावस्नेहवती प्रकृत्या पक्षपातिनीत्यर्थः ॥ ३३ ॥

चारणविरूपवामनदुर्गन्धिग्राम्यरोगिणां भार्या।
कुपुरुषवृद्धक्लीबप्रमदा एता अयत्नसाध्याः स्युः ॥ ३४ ॥

चारणेति। चारणाः नटभाण्डिकदूतचरादयः। विरूपो रूपहीनः, अङ्गहीनो वा, वामनः ह्रस्वकायः, दुर्गन्धी देहे मुखावयवादिषु दुर्गन्धवान्, ग्राम्यो ग्रामीणः कार्याकार्यज्ञानशून्यइत्यर्थः। रोगिणः कुष्ठादिरोगग्रस्ताः एतेषां भार्या, कुपुरुषः कुत्सितजातिः पुरुषः कैवर्तशौण्डिकाभीरप्रभृतिः, वृद्धः स्थविरः, क्लीबो नपुंसकः, एतेषां प्रमदाश्च अयत्नसाध्याः अभियोगमात्रादेव सिद्धा भवन्ति ॥ ३४ ॥

अङ्गुष्ठादधिकाग्रा वामपदे स्यात्प्रदेशिनी यस्याः।
हीनाग्रमध्यमा वा स्पृशति न भूमिं कनिष्ठा वा ॥३५॥

अङ्गुष्ठेति। यस्या वामपादे प्रदेशिनी अङ्गुष्ठादधिकाग्रा भवति तां पुंश्चलीं विदुः, सा प्रदेशिनी हीनाग्रमध्यमा वा हीनाग्रा मध्यमाङ्गुलिर्यस्याः सा प्रदेशिनीहीनाग्रमध्यमा सा पुंश्चली, यस्याः कनिष्ठा वा भूमिं न स्पृशति सापि पुंश्चली ॥ ३५ ॥

तदनन्तरद्वयं वा केकरदृक् पिङ्गलाची च।
तां पुंश्चलीमिति विदुः सामुद्रविदो हसनतुण्डीं च ॥ ३६ ॥

तदनन्तरेति। तदनन्तरद्वयं वा तस्याः कनिष्ठाङ्गुल्याः अनन्तरं समीपवर्त्यङ्गुलिद्वयम् अनामिका मध्यमा च भुवं न स्पृशति यदि सापि पुंश्चली। केकरदृक् केकराक्षी, पिङ्गलाक्षी च पिङ्गलनयना च, तां पुंश्चलीमसतीमिति सामुद्रविदः सामुद्रोक्तलक्षणज्ञाः विदुः, सामुद्रं नाम मनुष्याणां शरीरावयवमुद्रालक्षणकं शास्त्रम्, हसनतुण्डीं च निष्कारणहासवदनां च पुंश्चलीं वदन्ति ॥ ३६ ॥

प्रकरणत्रयार्थमुपसंहरन्नाह।

सिद्धतामात्मनो ज्ञात्वा लिङ्गान्युन्नीय योषिताम्।
व्यावृत्तिकारणोच्छेदान्नरो योषित्सु सिध्यति ॥ ३७ ॥

सिद्धतामिति। आत्मनः सिद्धतां, शूरः समुचितभाषीत्यादिलक्षणैः स्त्रीषु सिद्धत्वं ज्ञात्वा, योषितां लिङ्गानि अयत्नसाध्यालक्षणानि पुंश्चलीलक्षणानि वा उन्नीय युक्त्या निश्चित्य, व्यावृत्तिकारणोच्छेदात् पूर्वोक्तव्यावृत्तकारणानां पञ्चानामपि छेदान्नरो योषित्सु सिध्यति सिद्धिं गच्छति ॥ ३७ ॥

इच्छा स्वभावतो जाता क्रियया परिबृंहिता।
बुद्ध्या संशोधितोद्वेगा स्थिरा स्यादनपायिनी ॥३८॥

इच्छेति। इच्छा स्वभावतः प्रकृत्या जाता सती, क्रियया वक्ष्यमाणया परिबृंहिता दृढीकृता वर्द्धिता वा बुद्ध्या स्वयुक्त्या संशोधितोद्वेगा सती अनपायिनी स्थिरा स्यात् ॥ ३८ ॥

क्रियया परिबृंहितेत्युक्तं तस्मात्क्रियाप्रदर्शनमिदानीं क्रियते।

यासां प्रथमं साहसमथवा निर्यन्त्रणं वचो यासु।
ताः स्वयमभियोक्तव्यास्तद्विपरीतास्तु दूतीभिः ॥३९॥

यासामिति। यासामङ्गनानां प्रथमं साहसं, ततः पूर्वसाहसकारिण्यः। अथवा यासु अङ्गनासु विषये वचो निर्यन्त्रणम् अनिवारणम्, ताः अङ्गनाः स्वयमभियोक्तव्याः आत्मना अभियोक्तव्याः, तद्विपरीता एतल्लक्षणविपरीतास्तु दूतीभिरभियोक्तव्याः ॥ ३९ ॥

तत्र प्रायोवादेन दर्शयन्नाह।

स्वयमभियोगे कार्ये प्रणयं घटयेदलम्पटः प्रथमम् ।
आकूतमदनलेखां दृग्दूतीं प्रेरयेद्बहुशः ॥४०॥

स्वयमिति । स्वयमभियोगे कार्ये आत्मनैवाभियोगे कार्ये, प्रथमम् अलम्पटः अलोलुपः सन् प्रणयं स्नेहं घटयेत् परिचयं कुर्यादित्यर्थः । आकूतमदनलेखाम् आकूतोऽनुरागः स एव मदनलेखो यस्याः सा तथोक्तां दृग्दूतीं दृगेव दूती दृग्दूती तां बहुशः प्रेरयेत् सानुरागं बहुशः पश्येत् । स्वयमभियोक्ष्यमाणस्त्वादावेव परिचयं कुर्यात् । तस्याः स्वाभाविकं दर्शनं प्रायत्निकं च । स्वाभाविकमात्मनो भवनसन्निकर्षे, प्रायत्निकं तु मित्रज्ञातिवैद्यमहामात्रभवनसन्निकर्षे,विवाहयज्ञोत्सवव्यसनोद्यानगमनाचारेषु इति वात्स्यायनः॥४०॥

तत्र च द्विविधे संदर्शने परिचयकारणमपि बाह्याभ्यन्तरभेदेन द्विविधम्, तत्र प्रथमं बाह्यं परिचयकारणं ब्रूते ।

केशस्रंसनसंयममङ्के निज एव कररुहैश्छुरणम् ।
आभरणनादमसकृद् मर्दनमधरोष्ठयोः कुर्यात् ॥४१॥

केशेति । केशस्रंसनसंयमं केशानां संयमं बन्धनं स्रंसनं मोचनं वा तस्याः प्रेक्षमाणायाः स्वयं कुर्यात् । निज एव स्वकीय एवाङ्के कररुहैर्नखैश्छुरणं नखाधिकारोक्तं कुर्यात्, आभरणानां नादं हारकटकाद्याभरणानां शब्दं सा यथा संश्रृणुयात्तथा कुर्यादित्यर्थः । असकृदधरोष्ठयोर्मर्दनम् अङ्गुष्ठसम्पुटेन घर्षणं कुर्यात् । ओष्ठ उत्तरः, अधरः अधरोष्ठः ॥ ४१ ॥

उत्सङ्गसङ्गतश्च प्रियसुहृदः साङ्गभङ्गमपि जृम्भेत् ।
विसृजेद्गद्गदवाक्यं भ्रुवमेकां प्रह्वयेद्भूयः ॥ ४२ ॥

उत्सङ्गेति । प्रियसुहृदः प्रियवयस्यस्य उत्सङ्गसङ्गतः अङ्के स्थितः सन् साङ्गभङ्गम् अङ्गभङ्गेन सहितं यथा तथा जृम्भेत् जृम्भां कुर्यात्, गद्गदवाक्यं गद्गदवचनं विसृजेद् ब्रूयात्, भूयो बहुश एकाम्भ्रुवं प्रह्वयेत् प्रह्वीकुर्यात् ॥ ४२ ॥

अन्यापदेशतस्तत्कथया सखिभिः समं तिष्ठेत् ।
सादरमस्या वचनं शृणुयाद् ब्रूयाद् मनोरथं व्याजात् ॥४३॥

अन्यापदेशत इति । अन्यापदेशातोऽन्यापदेशात् तत्कथया तस्याः कथया अन्यापदेशोक्तया द्व्यर्थया सखिभिः स्ववयस्यैः समं सार्द्धं तिष्ठेत्, अस्या नायिकाया वचनं सादरं यथा तथा अवहितः शृणुयात्, व्याजात् केन चिच्छद्मना मनोरथं वाञ्छां ब्रूयात् ॥ ४३ ॥

सुहृदि शिशौ वा जनयेत्तामेवोद्दिश्य चुम्बनाश्लेषम् ।
उत्सङ्गमङ्कमस्या लघु स्पृशेद्बाललालनव्याजात् ॥४४॥

सुहृदीति । तां नायिकामेवोद्दिश्य लक्षीकृत्य सुहृदि मित्रे, शिशौ बालके वा चुम्बनाश्लेषं चुम्बनमालिङ्गनं च जनयेत् । किञ्च, अस्याः उत्सङ्गमङ्क,मङ्कं च बाललालनव्याजात् अस्याः पुत्रस्य लालनच्छलात् लघु किञ्चित् शनैश्शनैः स्पृशेदित्यर्थः । जिह्वया चास्य बालस्य ताम्बूलदानं प्रदेशिन्या चास्य हनुदेशघट्टनमन्यच्च यथायोगं यथावकाशं च प्रयोक्तव्यम् ॥ ४४ ॥

बालक्रीडनकानां दानादाने कथां च तद्व्याजात् ।
तत्सम्वादिनि लोके प्रीतिं संसृज्य संचारम् ॥ ४५ ॥
शृण्वत्यामपि तस्यामविदितवद्विशदमदनतन्त्रकथाः ।
कुर्यादुद्यति चैवं प्रणये निक्षेपमादध्यात् ॥४६॥

बालेति । बालक्रीडनकानां दानादाने दानं वितरणम्, आदानं ग्रहणम्, तच्छलात्कथां च योजयेत्, दानग्रहणसम्बन्धेन सन्निकृष्टत्वात्कथायोजनं कार्यमित्यर्थः । बालक्रीडनकानां चास्य दानं, ग्रहणं तेन संनिकृष्टत्वात् कथायोजनं तत्संभाषणक्षमेण जनेन प्रीतिमासाद्य कार्यम् इति वात्स्यायनः । इममेवार्थमाह तत्संवादिनीति । लोके जने तेन बालेन सह संवादिनि, अत्र लोकशब्देन सैवोच्यते, तस्यां सम्भाषणक्षमायामित्यर्थः । प्रीतिं संसृज्य संचारं गमनागमनादिकं कुर्यादित्यर्थः । तदनन्तरं शृण्वत्याम् आकर्ण्यमानायां तस्याम् अविदितवत् अजानन्निव विशदमदनतन्त्रकथाः विस्पष्टं कामकथाः कुर्यात् एवं प्रणये स्नेहं उद्यति जायमाने सति तद्गृहे निक्षेपमादध्यात् ॥ ४६ ॥

इतः परमाभ्यन्तरं परिचयकारणमुच्यते।

प्रतिमुहुरहरहरथवा यस्य ग्रहणेन भवति संश्लेषः।
अथ योजयेन्निजैस्तां दारैर्विश्वासगोष्ठीषु ॥४७॥

प्रतिमुहुरिति। अथ अहरहः प्रतिदिनं प्रतिमुहुः वारंवारं यस्य तद्गृहे न्यासीकृतस्य पूगीफलसौगन्धिकादेः ग्रहणेन संश्लेषो भवति तन्निक्षेपणद्रव्यं निदध्यादिति पूर्वेण सम्बन्धः। अथ तां निजैस्स्वकीयैः दारैः विश्वासगोष्ठीषु योजयेत्। अत्र तामात्मनो दारैः सह विस्रम्भगोष्ठ्यां विविक्तासने च योजयेन्नित्यदर्शनार्थं विश्वासार्थं चेति वात्स्यायनः॥ ४७॥

क्रयविक्रयोद्यतायामस्यां स्वं योजयेत्तदासक्तः।
परबुद्धिरन्ध्ररोधं कुर्यात्प्रणयानुबन्धं च ॥४८॥

क्रयेति। अस्यां क्रयविक्रयोद्यतायां क्रयविक्रयतत्परायां सत्यां तदासक्तस्तस्मिन् क्रयविक्रययोग्ये द्रव्ये आसक्तः तस्यामासक्तो वा कामी स्वमात्मानं योजयेत्, तत्कार्यसंपादन इति शेषः। सुवर्णकार, मणिकार, वैकटिक, लोहकार, नीलीकुसुम्भरञ्जकादिषु च कामार्थिन्यां सहाऽऽत्मनो वश्यैश्चैषां तत्संपादने स्वयमपि यतेतेति वात्स्यायनः। परबुद्धिरन्ध्ररोधं परबुद्धेः अन्य इति बुद्धे रन्ध्रस्य द्वारस्य रोधं कुर्यात्, अयमात्मीय इति यथा मन्यते तथा कुर्यादित्यर्थः। प्रणयानुबन्धं स्नेहानुबन्धनं च कुर्यात्॥ ४८॥

इतिहासादिकथायां द्रव्यगुणे वा विवादमुत्पाद्य।
तत्परिजनैस्तया वा वार्त्तास्तां कृतपणः पृच्छेत् ॥४९॥

इतिहासेति। इतिहासादिकथायां द्रव्यस्य यस्य कस्य चिद् गुणनिमित्ते वा विवादं कलहमुत्पाद्य तस्याः परिजनैः, तया वा कृतपणः कृतपरिपणव्यवहारो वार्त्ताः तां पृच्छेत्॥ ४९॥

एवं प्रणयं प्रणयिन्निङ्गितमालोचयेदस्याः।
अभिमुखमालोकयते लज्जामालम्बते मुहूर्त्तं च ॥५०॥

एवमिति । एवमनेन प्रकारेण प्रणयं स्नेहं परिचयमिति यावत् । प्रणयन् कुर्वन् इङ्गितं चेष्टाम् आलोचयेत् अस्य अभिमुखं सम्मुखम् आलोकयति पश्यति मुहूर्त्तं क्षणमात्रं लज्जामालम्बते लज्जालुर्भवतीत्यर्थः ॥ ५० ॥

रुचिरं न चिरं व्याजाद्व्यनक्ति गात्रं, पदा भुवं लिखति ।
गुप्तं सस्मितमसकलमविरलमथवा विलोकते मन्दम् ॥५१॥

रुचिरमिति । व्याजाच्छलात् चिरं रुचिरं सुन्दरं गात्रं न व्यनक्ति व्यनक्त्येव नतु चिरमित्यर्थः । रुचिरं गात्रमिति कुचबाहुमूलोपलक्षणम् । पदा चरणेन भुवं लिखति, गुप्तं यथा तथा परैरदृश्यमानमित्यर्थः । सस्मितम् असकलम् असंपूर्णम् अविरलं बहुलं अथवा मन्दं विलोकते ॥ ५१ ॥

भावादङ्कगतं शिशुमालिङ्गति चुम्बति ब्रूते ।
किंचित्स्पृष्टाधोमुखमविशदवर्णक्रमं स्मितप्रायम् ॥५२॥
वदति तदन्तिकसंस्थितिमनुसरति व्याजतो दीर्घम् ।
मां पश्यत्विति भावाद्यत्किंचिद्व्याहरत्युच्चैः ॥ ५३ ॥

भावादिति । अङ्कगतं स्वाङ्कगतं शिशुं भावादालिङ्गति, चुम्बति, ब्रूते । तेन किंचित्स्पृष्टा अधोमुखं यथा तथा अविशदवर्णक्रमम् अव्यक्तपदाक्षरं स्मितप्रायं वा वदति, तदन्तिकसंस्थितिं तस्य समीपसंस्थितिं व्याजतः दीर्घमनुसरति, व्याजतो दीर्घकालं तदन्तिकं तिष्ठतीति यावत् । भावाद्यत्किंचिदुच्चैः व्याहरति ब्रूते ॥ ५३ ॥

पश्यति यत्र सदासौ तत्र कथाव्याजमाचरति ।
तद्दत्तं वहति सदा किमपि समीक्ष्यान्तिके हसति ॥५४॥

पश्यतीति । असौ यत्र सर्वदा पश्यति तत्र कथाव्याजमातनुते करोति, सदा तद्दत्तं तेन दत्तं क्रयविक्रयरूपेण यत्किञ्चिदाभरणादि वस्त्रादिकं तत्सदा वहति अन्तिके समीपे किमपि अवलोक्य हसति ॥ ५४ ॥

उत्सङ्गसङ्गता च प्रियसख्या विविधविभ्रमं तनुते ।
प्रीतिं द्यूतं च कथां तत्परिचारैः समं कुरुते ॥५५॥

उत्सङ्गेति । प्रियसख्याः स्वसख्याः उत्सङ्गसङ्गता सती विविधविभ्रमं तनुते, प्रीतिं, द्यूतं, कथां च तत्परिवारैस्तस्य नायकस्य परिवारैः समं कुरुते ॥ ५५ ॥

तत्परिजनाच्च शृणुते तस्य कथां स्वमिव तं समादिशति ।
विश्वसिति तस्य सखिषु स्नेहात्तद्वाचमाचरति ॥५६॥

तादिति । तत्परिजनात्तत्परिजनसकाशात्तस्य कथां शृणुते, स्वमात्मीयमिव तस्य परिजनमादिशति कार्ये नियुङ्क्ते, तत्सखीषु विश्वसिति विश्वासं करोति, स्नेहात्तद्वाचं तस्य सखीनां वाचमाचरति ॥ ५६॥

न ददाति तस्य दर्शनमनलङ्कराथ याचिता तेन ।
वितरति सख्या हस्ते कुसुमापीडादि सालस्यम् ॥५७॥

न ददातीति । तस्य दर्शनमनलङ्कारा अभूषिता सती न ददाति अलङ्काररहिता तत्पुरतो न प्रवर्त्तते, अथ तेन याचिता प्रार्थिता सख्या हस्ते तस्मै कुसुमापीडादि कुसुमशेखरादि वात्सल्यात् वितरति, सधीरमेवगात्राद्विमुच्य सख्या हस्ते ददातीति यावत् ॥ ५७ ॥

निःश्वसिति तिर्यगालोकयति विमृद्गाति पाणिना स्वकुचम् ।
संयच्छते च वसनं करशाखास्फोटनं कुरुते ॥५८॥
अर्थं वदति सलज्जं जनयति जृम्भा निहन्ति कुसुमाद्यैः ।
रुचिरं रचयति तिलकं सख्याःश्रोणीं च संस्पृशति ॥५९॥

निःश्वसितीति । निःश्वसिति निःश्वासं करोति, तिर्यगालोकयति कटाक्षेण पश्यति, पाणिना स्वकुचौ मृद्गाति, वसनं वस्त्रं संयच्छते ददाति, तस्मै ददातीत्यर्थः । करशाखास्फोटनम् अङ्गुलीस्फोटनं कुरुते, सलज्जं यथा तथा द्व्यर्थं वदति, जृम्भां जनयति, कुसुमाद्यैर्निहन्ति ताडयति, रुचिरं मनोहरं तिलकं रचयति, सख्यास्तिलकं रुचिरं रचयति, सख्याः श्रोणीं च स्पृशति ॥ ५९ ॥

तारं कासति केशान् मुञ्चति तद्वेश्म गच्छति व्याजात्।
करचरणाङ्गुलिवदने स्विद्यति संमार्ष्टि भुजवल्ल्या ॥ ६० ॥
कति युवतयोऽस्य भव्याः कतमाः कस्यामसौ सदा रमते ॥
इत्यादि तस्य लोकं पृच्छति निभृते च साकूतम् ॥ ६१ ॥

तारमिति। तारं दीर्घं कासति कासनं करोति, केशान् मुञ्चति, मुहुर्धम्मिल्लं विस्रंसयतीत्यर्थः। व्याजात्तद्वेश्म तद्गृहं गच्छति, करचरणाङ्गुलिवदने स्विद्यति सति, तं दृष्ट्वैतान्यङ्गानि नायिकायाः स्विद्यन्तीति भावः। भुजवल्ल्या स्वबाहुलतया सम्मार्ष्टि स्वेदमार्जनं करोति, प्राण्यङ्गत्वादेकवद्भावः। अस्य कति युवतयो भव्याः श्रेष्ठाः, कतमाः, कियत्यः, स्त्रिय इत्यध्याहार्यम्। कस्यां युवतौ सदाऽयंरमत इत्यादि निभृते रहसि तस्य लोकं तत्परिजनं साकूतं सानुरागं पृच्छति।

दृष्ट्वैतान् भावसंयुक्तानाकारानिङ्गितानि च।
कन्यायाः सम्प्रयोगार्थं ततो योगान् विचिन्तयेत् ॥
बालक्रीडनकैर्बाला, कलाभिर्यौवने स्थिता,।
वत्सला चापि संग्राह्या विश्वास्यजनसंग्रहात् ॥
इति वात्स्यायनः ॥ ६० ॥ ६१ ॥

इति दर्शितेङ्गितायां संश्लेषं स्पृष्टकादिना युञ्ज्यात्।
अकलितमम्बुविहारे स्तनजघनं संस्पृशेदस्याः ॥ ६२ ॥

इतीति। इत्यनेन प्रकारेण तस्यां दर्शितेङ्गितायां सत्यां स्पृष्टकाद्याख्येनालिङ्गनादिना संश्लेषं युञ्ज्यात्, अम्बुविहारे जलक्रीडायाम् अस्याः स्तनजघनं स्तनौ, जघनं च अकलितं केनाप्यज्ञातं यथा तथा संस्पृशेत्, प्राण्यङ्गत्वाद् द्वन्द्वैकत्वम् ॥ ६२ ॥

अवतार्य कामपि रुजं वार्ताव्याजेन तत्र नीतायाः।
आलम्ब्य पाणिमस्याः शिरसि दृशोः स पुलकं दद्यात् ॥६३॥

अवतार्येति। कामपि यां कांचिद्रुजं रोगमवतार्य शरीरे सङ्क्रमय्य रोगातुरः शयीत, वार्त्ताव्याजेन रोगस्यावस्था ज्ञातव्या इति छलेन तत्र नीताया आगताया अस्याः पाणिमालम्ब्य. शिरसि दृशो-

नयनयोश्च स पुलकं स्पर्शात्संजातरोमाञ्चं यथा तथा दद्यात्, अस्याः पाणिमालम्ब्य शिरसि दृशोश्च पुलकं दद्यादिति यावत् ॥ ६३ ॥

अनुरागपेशलं च ब्रूयादुभयार्थमीदृशं वाक्यम् ।
शमय मम सुमुखि ! पीडां कलय निमित्तं त्वमेवास्याः ॥६४॥

अनुरागेति । अनुरागपेशलम् अनुरागेण रम्यं यथा तथा ईदृशं वक्ष्यमाणप्रकारमुभयार्थं द्व्यर्थं वाक्यं ब्रूयात्, कथं; हे सुमुखि ! मम पीडां शमय शान्तां कुरु, त्वमेवास्याः पीडाया निमित्तं कारणं कलय जानीहि, अत्र त्वमेव मम पीडायाः कारणं विचारयेत्येकोर्थः, एतस्याः पीडायाः कारणं त्वमेव कलय जानीहीति द्वितीयोर्थः, योऽप्यर्थः कलयेत्यनेन सूच्यते ॥ ६४ ॥

तदेव स्फुटयति

सुतनु ! मदनादरोऽयं युक्तं किं त्वद्गुणस्य फलम् ।
इत्यौषधादिपेषणविधिषु व्यापारयेदेनाम् ॥ ६५ ॥

सुतान्विति । हे सुतनु ! त्वद्गुणस्य तव सौजन्यादिगुणस्य फलं फलभूतो मदनादरो मय्यनादरोऽयमीदृशो युक्तः किम् ?, इदृशी उपेक्षा न युज्यत इति भावः । त्वद्गुणस्य तव सौन्दर्यस्य फलभूतो मयि वर्तमानो मदनादरः पक्षपातो युक्तः किम् ? त्वय्यपि वर्ततेऽ पीत्यपरोर्थः । त्वद्रूपादिदर्शनमारभ्य मन्मथावेशो मम जातः । मामुद्दिश्य तवापि जातो न वेति प्रश्न इत्यर्थः । इत्युक्त्वा औषधादिपेषणविधिषु एनां व्यापारयेत् ॥ ६५ ॥

सनखस्पर्शं कुर्याद्दानादानं च पूगकुसुमादेः ।
करजरदनपदलाञ्छितमस्यै पर्णादिकं दद्यात् ॥ ६६ ॥

सनखेति । पूगकुसुमादेः पूगफलपुष्पादेः आहार्यद्रव्यस्य सनखस्पर्शं नखस्पर्शसहितं यथा तथा दानादानं च कुर्यात् । अस्यै करजरदनपदलाञ्छितं नखदन्तक्षतकृतचिह्नं पर्णादिकं नागवल्लीदलादिकं दद्यात् ॥ ६६ ॥

अथ सन्निधाप्य रहसि प्रौढाश्लेषादिसुखरसं विन्द्यात् ।
सुचिरमनोरथसञ्चितमन्मथगुरुदीक्षया क्रमशः ॥ ६७ ॥

अथेति । अथानन्तरम् अन्योन्यानुरागप्रकाशकेङ्गितपरिचयविश्वासजननानन्तरं रहसि एकान्ते सन्निधाप्य स्थापयित्वा प्रौढाश्लेषादिसुखरसं प्रौढं यथा तथा आलिङ्गनादिसुखरसं विन्द्यात् लभेत, सुचिरमनोरथसञ्चितया मन्मथगुरुदीप्तया क्रमशः सुखं लभेत ॥६७॥

निबिडतमसि निशि नार्यो व्यवसितरतयो भवन्ति रागिण्यः।
अभियुक्तास्तत्काले त्यजन्ति पुरुषं न ताः प्रायः ॥ ६८ ॥

निबिडेति । निबिडतमसि सान्द्रतरान्धकारे निशि अर्धरात्रौ नार्यो रागिण्यो व्यवसितरतयो भवन्ति, तत्काले तस्मिन् काले अभियुक्ताः कृताभियोगा नार्यः रतये पुरुषं न त्यजन्ति । प्रायोवादोऽयम्॥६८॥

इदानीमभियोगस्य वर्जनीयस्थलान्याह ।

वृद्धाऽनुभूतविषया यत्र वसेत् तद्विदूरतो वर्ज्यम् ।
यत्रैकामभियुङ्क्ते तत्रान्यां लंघयेन्नैव ॥ ६९ ॥

वृद्धानुभूतेति । अनुभूतविषया अनुभूता विषया भोगा यया सा तथोक्ता वृद्धा जरती स्त्री यत्र स्थाने वसति तत्स्थानं दूरतस्त्यजेत्, सा खल्वतिप्रौढा परेषामिङ्गिताकारचेष्टासंचारादिभिर्दुर्लक्ष्यमप्यर्थं ज्ञातुं पारयति । अथ वा तादृग्विधायाः प्रौढाया गृहं सङ्केतीकृत्य संचारिणो व्यवहरन्तीति तद्गृहं वर्ज्यमिति भावः । यत्र स्थाने एकामङ्गनाम् अभियुङ्क्ते तत्रान्यामङ्गनां न लङ्घयेत् लङ्घिते सति व्यापारस्य प्रकाशनं स्यात् ।

अन्यत्र दृष्टसञ्चारस्तद्भर्ता यत्र नायकः ।
न तत्र योषितं काञ्चित्सुप्रापामपि लङ्घयेत् ॥
शङ्कितां रक्षितां भर्त्रा सश्वश्रूकां च योषितम् ।
न तर्कयेत मेधावी जानन् प्रत्ययमात्मनः ॥

इति वात्स्यायनः ॥ ६९ ॥

अभियोगे सति नार्या भावपरीक्षा प्रयत्नतः कार्या ।
यदि गृह्णात्यभियोगं रतिभावं न प्रकाशयति ॥ ७० ॥

अभियोगइति । अभियोगे सति नार्याः भावपरीक्षा प्रयत्नतः कार्या कर्त्तव्या, अभियोगं गृह्णाति यदि रतिभावान्न प्रकाशयति ॥७०॥

दूतीसाध्यां विद्यादभियोगं या तु नादत्ते ।
संगृह्यते च दोलायितचित्ता साध्यते क्रमशः ॥७१॥

दूतीसाध्यामिति । या तु अभियोगं नादत्ते न स्वीकरोति; तां दूतीसाध्यां विद्यात्, अप्रतिगृह्य वाऽभियोगं दोलायितचित्ता पुनरपि संशयितमानसा क्रमशः साध्यते ॥ ७१ ॥

अगृहीत्वाप्यभियोगं सविशेषालिङ्गितं विविक्ते या ।
धीरा दर्शयति स्वं ग्राह्यामाहुर्बलेननाम् ॥७२॥

अगृहीत्वेति । या अभियोगमगृहीत्वापि तत्कालमनङ्गीकुर्वत्यपि विविक्ततया विहारभूमेरेकान्तत्वेन स्वमात्मानं धीरा सती निर्विकारा सतीत्यर्थः । सविशेषालिङ्गितं हस्तस्वस्तिकादिभावप्रकाशकालिङ्गनविशेषसहितं यथा तथा दर्शयति, एनाम् आचार्या बलात्कारेण ग्राह्यामाहुः ॥ ७२ ॥

मिलति सहतेऽभियोगं प्रणयच्छेदेन सा साध्या, ।
परिहरति याऽभियुक्ता न मिलति पुनरात्मगौरवतः ॥७३॥

मिलतीति । या मिलति सङ्गच्छते, अभियोगं च सहते, प्रणयच्छेदेन छन्दानुवर्तिना स्नेहेन सा साध्या, तथाविधं स्नेहं कुर्यादित्यर्थः । या अभियुक्ता याचिता सती परिहरति नेच्छति, किं च; पुनरात्मगौरवतः आत्मनो गौरवात्सतीत्वाभिमानान्न मिलति ॥७३॥

नच नायकगौरवतः प्रत्याचष्टेऽतिपरिचयात्साध्या, ।
प्रत्यादिश्य करोति प्रीतिं या सा सुसाध्यैव ॥ ७४ ॥

नचेति । नायकगौरवतः नायकस्य गौरवात् न च प्रत्याचष्टे प्रत्यादिशति च, अतिपरिचयात् साध्या कृच्छ्रेण साध्या भवति, नायकगौरवान्नेच्छतीति न किंत्वात्मगौरवाभिमानादेवेति तस्याः कृच्छ्रसाध्यत्वम् । प्रथममभियोगं प्रत्यादिश्य अनङ्गीकृत्य प्रीतिं स्नेहं करोति या सा सुसाध्यैव सिद्धप्रायैव ॥ ७४ ॥

आकारिता च सूक्ष्मं व्यञ्जयति स्पष्टमुत्तरं सिद्धा ।
या स्वयमाकारयति प्रथमं, सा प्रथमसिद्धैव ॥ ७५ ॥

आकारितेति। या सूक्ष्मं परैरविदितं यथा तथा आकारिता आहूता सती विस्पष्टं प्रकाशमुत्तरं व्यञ्जयति व्यक्तीकरोति सा सिद्धा, या च स्वयं प्रथममाकारयति, जारमिति शेषः। सा प्रथमसिद्धैव॥७५॥

उपसंहरति

धीरायामप्रगल्भायां परीक्षिण्यां च योषिति।
एष सूक्ष्मो विधिः प्रोक्तः सिद्धा एव स्फुटाः स्त्रियः॥७६॥

धारायामिति। एष एवं प्रकारेणोक्तः सूक्ष्मो विधिरिङ्गिताकारचेष्टापरीक्षाविधिरित्यर्थः। धीरायां गम्भीरप्रकृतौ नायिकायां प्रोक्तः प्रयोज्यइत्यर्थः। अथवा अप्रगल्भायां बालायां मुग्धायां प्रियायाम्, अथवा परीक्षिण्यां परीक्षणशीलायाम् अभियोक्तुर्हृदयमविज्ञाय संशयानायां वा योषिति प्रोक्तः। स्फुटाः स्फुटभावास्तु स्त्रियः सिद्धा एव, भावपरीक्षामकृत्वैव अभियोगमात्रात्साध्या इत्यर्थः। अधीरासु प्रगल्भासु विश्वसनशीलासु च सिद्धासु स्फुटभावासु एष सूक्ष्मो विधिर्न प्रजोज्यः।

आदौ परिचयं कुर्यात्ततश्च परिभाषणम्।
संमेलनं ततः कुर्यात्पश्चादाकारवेदनम्॥
प्रत्युत्तरेण पश्येच्चदाकारस्य प्रतिग्रहम्।
ततोऽभियुञ्जीत नरः स्त्रियं विगतसाध्वसः॥
इति॥ ७६॥

अथ विसृष्टार्था, परिमितार्था, पत्रहारी चेति
त्रिविधदूतीविधेयमाह।

दूतीविधेयमधुना यादृग्वक्ष्यामि तदपि संक्षेपात्।
प्रथममतिशीलयोगादाख्यानाद्यैर्विशेषयेदेनाम्॥ ७७॥

दूतीति। अधुना दूत्या यादृक् विधेयं तदपि संक्षेपाद्वक्ष्यामि, प्रथमं पूर्वमतिशीलयोगादाख्यानाद्यैः अतिशीलेन अत्यादरेण, योगैः सुभगङ्करणौषधप्रयोगप्रीतियोगाद्यैः,आख्यानैः पुराणेतिहासप्रसिद्धैः, कथाभिः प्रहेलिकैतिह्यप्रायाभिः,आद्यशब्देन रूपवेषवयोगुणवर्णनाद्यैः एनामभियोज्यां विशेषयेद्वशीकुर्यात्॥ ७७॥

श्रुतशोभासौभाग्यदमन्त्रौषधिकाव्यरतिरहस्यानाम् ।
घटयेत्कथाप्रसङ्गान् ब्रूयाद्विश्वासमुत्पाद्य ॥ ७८ ॥

श्रुतेति । अनुप्रवेशानन्तरं श्रुतस्य वेदशास्त्रोक्तप्रसङ्गस्य शोभायाः सौन्दर्यस्य, सौभाग्यदानां मन्त्राणां, तादृशानामौषधीनां, काव्यानां कादम्बर्यादीनां, रतिरहस्यस्य च प्रसङ्गान् घटयेत् । पूर्वोक्तश्लोकोक्तपरिपाटी नायिकायाः शीलपरीक्षाप्रयोजनिका । अस्मिन् श्लोके तद्विश्वासदार्ढ्यमुक्तम् । तस्याः शीलं ज्ञात्वा अनन्तरं विश्वासमुत्पाद्य एवं वक्ष्यमाणप्रकारेण ब्रूयात् ॥ ७८ ॥

रूपकलाविज्ञानं शीले क्व तव क्व चायमीदृशो भर्त्ता ।
धिग्दैवमुचितविमुखं तारुण्यं ते विडम्बयति ॥ ७९ ॥

रूपेति । तव रूपकलाविज्ञानं क्व, रूपं सौन्दर्यं, कला प्रावीण्यं, विज्ञानं विवेकः क्व, ईदृशो विवेकशून्यो भर्त्ता क्व, उक्तिविमुखम् अनुचितकर्म्मकारि दैवं धिक्, ते तव तारुण्यं यतो दैवं विडम्बयति ततो दैवं धिक् ॥ ७९ ॥

इर्ष्यालुरकृतवेदीमृदुवेगः शाठ्यवसतिरविदग्धः ।
दासोपि ते न युक्तः पतिरयमाः कष्टमित्याद्यैः ॥ ८० ॥
पतिदूषणगणवचनैर्वैराग्यं लम्भयेदेनाम् ।
यस्मिन्नुद्विजते सा दोषे भूयस्तमेव पल्लवयेत् ॥ ८१ ॥

ईर्ष्यालुरिति । ईर्ष्यालुः ईर्ष्यावान्, अकृतवेदी अकृतज्ञः, मृदुवेगो मन्दवेगः, शाठ्यवसतिः शाठ्यवासः, अविदग्धः मूढः, एवंभूतोऽयं तव दासोपि भवितुं न युक्तः नार्हः, अयं ते पतिः किल, आः कष्टम् इत्याद्यैः पतिदूषणगणवचनैः पत्युर्दूषणगणानां वचनैः एनां वैराग्यं लम्भयेत् विरक्तां कुर्यात् । तत्रैव वैराग्यलम्भने क्रममाह— यस्मिन् भर्त्तृदोषे कथितं सा कामिनी उद्विजते उद्वेगं गच्छति, भूयस्तमेव दोषं पल्लवयेत् प्रकाशयेत्, वर्द्धयेदिति भावः ॥ ८१ ॥ ८२ ॥

नायकगुणगणभणितिं कुर्यादेवं प्रसङ्गेन ।
उत्पाद्य सौमनस्यं ब्रूयात्सुभगे शृणुष्व यच्चित्रम् ॥ ८३ ॥

नायकेति । प्रसङ्गेन येन केनापि प्रसङ्गेन नायकस्य जारस्य गुणगणानां भणितिं वचनम् एवं वक्ष्यमाणप्रकारेण कुर्यात्, अनन्तरं सौमनस्यं तस्याः उत्पाद्य हे सुभगे ! यच्चित्रं तच्छृणुष्वेति ब्रूयात्, आत्मनेपदं चिन्त्यम् ॥ ८३ ॥

चित्रमेव कथयति ।

चित्रं किमपि व्यतिकरमसौ युवा कुसुमसुकुमारः ।
दृष्टिभुजङ्गीदष्टस्तव सखि ! सन्देहमारूढः ॥ ८४ ॥

चित्रमिति । किमपि चित्रम् आश्चर्यं व्यतिकरं शृणुष्व, असौ युवा जारः कुसुमसुकुमारः कुसुमादपि कोमलदेहः, हे सखि ! तव दृष्टिरेव भुजङ्गी तया दष्टः संदेहं मरणसंदेहमारूढः ॥ ८४ ॥

भुजङ्गीदष्टस्य मरणसन्देहमारूढस्यैव समाधिमाह ।

श्वसिति स्विद्यति मुह्यति सन्तापस्तस्य कोऽपि दुर्वारः ।
त्वन्मुखचन्द्रसुधारसमप्राप्य प्राणिता नासौ ॥ ८५ ॥

श्वसितीति । श्वसिति निःश्वासान् करोति,स्विद्यति स्विन्नाङ्गो भवति । मुह्यति मूर्च्छितो भवति, तस्य दुर्वारः कोऽपि संतापो वर्त्तते, असौ कामी तव मुखचन्द्रसुधारसम् अमृतरसमप्राप्य न प्राणिता न जीविष्यति । विषमूर्च्छितस्य हि अमृतस्पर्शेन जीवनं प्रसिद्धम् । भवन्मुखशशिसुधालाभादेव जीविष्यतीति यावत् ॥ ८५ ॥

स्वप्नेऽपि तस्य सुभगे ! कदापि नेदृग्विकारोऽभूत् ।
इत्युक्ते यदि सहते पुनरपरेद्युः समेत्य सङ्कथयेत् ॥ ८६ ॥

स्वप्नेऽपीति । हे सुभगे ! सुन्दरि ! तस्य कामिनः स्वप्नेपि ईदृक् विकारः कदापि नाभूत् इत्युक्ते यदि सहते अवहिता शृणोति चेत् पुनरपरेद्युःअपि समेत्य गत्वा सङ्कथयेत्,सङ्कथा अन्योन्यसंलापः॥८६॥

किमित्याह ।

वृत्तमहल्यादीनां श्लाघ्यं स्त्रीसङ्गमभियोक्तुः ।
एवं प्रयुज्यमाने लक्षयितव्यस्तदीय आकारः ॥ ८७ ॥

वृत्तमिति । अहल्यादीनाम् आदिशब्दात् शकुन्तलातारादीनां वृत्तं संकथयेत्, अभियोक्तुः कामुकस्य श्लाघ्यं स्त्रीसङ्गं च कथयेत्, तस्य जारस्य वृषत्वं व्यवायित्वं, चतुःषष्टिविज्ञतां, सौभाग्यं नायकस्य च श्लाघनीयतां, प्रच्छन्नं सम्प्रयोगं, भूतमभूतपूर्वं वर्णयेद्, इति वात्स्यायनः । एवमनेन क्रमेण प्रयुज्यमाने सति तदीयस्तस्याः सम्बन्धी आकारो लक्षयितव्यः ॥ ८७ ॥

आकारलक्षणमेवाह ।

दृष्ट्वा ब्रवीति सस्मितमन्तिक एवोपवेशयति ।
पृच्छति भोजनशयने आख्यानं दिशति रहसि वा मिलति ८८

दृष्ट्वेति । दृष्ट्वा सस्मितं ब्रवीति, अभियोगं गृह्णाति चेत् अन्तिके समीप एव उपवेशयति, स्वसमीपे तां दूतीमुपवेशयतीत्यर्थः । भोजनशयने भोजनं, शयनं च पृच्छति, अद्य त्वया कथं भुक्तं; कानि व्यञ्जनानि; कथं ते शयनं; कुत्र इति वा पृच्छति, आख्यानं दिशति, आख्यानस्यावसरं ददातीत्यर्थः । रहसि वा तथा रहस्येव मिलति, वाशब्दोऽवधारणे ॥ ८८ ॥

निःश्वसिति जृम्भते वा स्ववित्तमस्यै ददाति किञ्चिद्वा ।
यान्तीमेष्यसि पुनरिति वदति,कथं साधुवादिनी भवती॥८९॥
वक्ति किमप्यसमञ्जसमित्युक्त्वा तत्कथां भजति ।
किन्न करोमि वचस्तव किन्तु शठोऽसावतीव मे भर्ता ॥९०॥

निःश्वसितीति। निःश्वसिति, जृम्भते वा, अस्यै दूत्यै स्ववित्तं किंचिद्ददाति, वा यान्तीं गच्छन्तीं तां दूतीं, पुनरेष्यसि कदा आगमिष्यसि ? इति वदति, साधुवादिनी सम्यग्भाषिणी भवती किमप्यसमञ्जसम् असाधुवादं कथं ? वदति इत्युक्त्वा तत्कथां नायकस्य कथां भजति, शाठ्यचापलादिपूर्ववृत्तानुवादं नायकसंबन्धिनं श्रोतुमपेक्षते इति यावत् । पूर्वप्रवृत्तं च तत्संदर्शनं कथाभियोगं स्वयमकथयन्ती तयोच्यमानमाकाङ्क्षतीति वात्स्यायनः । त्वद्वाक्यं किं न करोमि, किन्तु मे मम असौ भर्ता स्वामी अतीव शठः, अपराधं न सहत इति यावत् । मम मत्येति पाठान्तरे मम मत्या मम बुद्ध्या असौ अतीव शठ इति ज्ञात इति यावत् ॥ ८९ ॥ ९० ॥

हसति च तस्य विकारं श्रुत्वा भूयस्तु सोपहासेव।
इत्याकारप्रकटनमालोक्य प्राभृतं युञ्ज्यात् ॥ ६१ ॥

हसतीति। तस्य कामिनो विकारं श्रुत्वा हसति, अथवा तस्य भर्तुर्विकारमिति वा योज्यम्। भूयस्तु सोपहासेव सोल्लुण्ठेव भवति। इत्युक्तप्रकारेणाऽऽकारप्रकटनमालोक्य दर्शिताकारां ज्ञात्वा दूती प्राभृतमुपायनं प्रयुञ्ज्यात् प्रयच्छेत्, तासां मनोहराण्युपायनानि ताम्बूलम्, अनुलेपनम्, अङ्गुलीयकं, स्रजं, वासो वा तेन प्रहितमिति दर्शयेत्, तेषु यथार्थे तानि तानि नायकस्य नखदशनपदानि चिह्नानि स्युः, वाससि च कुङ्कुमाङ्गरागाभ्यामञ्जलिं निदध्यात्, पत्रच्छेद्यानि च नानाभिप्रायाकृतीनि दर्शयेत्, लेखपत्रगर्भाणि कर्णपत्राणि, आपीडकांश्च, तेषु स्वमनोरथख्यापनं, प्रतिप्राभृतदाने चैनां नियोजयेत्, एवं कृतपरस्परपरिग्रहयोश्च दूतीप्रत्ययात्समागम इतिबाभ्रव्यः। दूत्येनां दर्शिताकारां नायकाभिज्ञानैरुपबृंहयेत्, असंस्तुतां तु गुणकथनैरनुरागकथाभिश्चावर्जयेत्। नासंस्तुतादृष्टाकारयोर्दूत्यमस्तीत्यौद्दालकिः। असंस्तुतयोरपि संसृष्टाकारयोरस्तीति बाभ्रवीयाः। संस्तुतयोरप्यसंसृष्टा कारयोरपि दूत्यमस्तीति गोणिकापुत्रः। असंस्तुतयोरदृष्टाकारयोरपि दूती प्रत्ययादिति वात्स्यायनः ॥ ६१ ॥

ताम्बूलकुसुमलेपनदानैरुपबृंहयेद्भूयः।
इति सुघटितसद्भावा व्यसनविवाहोत्सवप्राये ॥ ६२ ॥
उद्यानपानयात्राजलावतारे हुतवहोत्पाते।
प्रविचिन्तितात्यये वा वेश्मनि निज एव तौ युञ्ज्यात् ॥६३॥

ताम्बूलेति। ताम्बूलकुसुमलेपनदानैर्भूयः उपबृंहयेत् इत्यनेन प्रकारेण सुघटितसद्भावा सम्यग्घटितसदभिप्राया दूती वक्ष्यमाणसमये तां युञ्ज्यात् योजयेत्। कदेत्याह—व्यसनविवाहोत्सवप्राये व्यसनप्राये आतुरे प्रस्तुते सति, विवाहप्राये विवाहप्रभृतिशोभनप्राये इत्यर्थः। उत्सवप्राये देवताराधनादिषु, उद्याने पुष्पावचयकाले, पानकाले मदिरापानवेलायां, यात्रायां; जलावतारे जलक्रीडायां, हुतवहोत्पाते अग्निदाहे, प्रविचिन्तितात्यये प्रकर्षेण चिन्तितात्यये निजे स्वकीये एव वेश्मनि वा किञ्चित् अत्ययं समुत्पाद्य तत्परिहारार्थमा-

गतौ युवानौ युञ्ज्यात् "उपायं चिन्तयन् प्राज्ञोऽप्यपायमनुचिन्तये" दितिन्यायेन, स्वकीयमेव वा वेश्म भवतु तत्रात्यय उद्वेगोऽस्ति वा न वेति विचार्य निरुपद्रवस्थलं चेत्तत्रैव चेत्यभिप्रायः। तस्या एव तु गृहे विदितनिष्क्रमप्रवेशे चिन्तितात्ययतत्प्रतीकारे च प्रवेशनमुपपन्नम्, अविज्ञातकाले अर्द्धरात्रौ वा निष्क्रमणं च नित्यं सुखोपायं चेति वात्स्यायनः। सखीभिक्षुकीक्षपणिकातापसीभवनेषु सुखोपाय इति गोणिकापुत्रः॥ ९२॥ ९३॥

सामान्येन दूतीकर्माण्युक्त्वा दूतीभेदं प्रदर्शयति।

बुद्ध्वैकस्य समीहितमात्मधियैवारभेत या कार्यम्।
सा हि निसृष्टार्थोक्ता लिङ्गेनोन्नीय या कार्यम्॥ ९४॥
शेषं संपादयति स्वयमेवैषा परिमितार्थोक्ता।
संसृष्टयोस्तु नेत्री सन्देशं पत्रहारी स्यात्॥ ९५॥

बुद्ध्वैकेति। द्वयोरेकस्य समीहितं बुद्ध्वाऽऽत्मधिया स्वबुद्ध्या या समीहितकार्यमारभते सा दूती निसृष्टार्थोक्ता निसृष्टार्था कथिता, या दूती लिङ्गेन लक्षणेन कार्यम् उन्नीय शेषं कार्यं स्वयमेव सम्पादयति एषा दूती परिमितार्थोक्ता, संसृष्टयोः नायिकानायकयोः सन्देशं नेत्री सा दूती पत्रहारिणी स्यात्, उभयोः सन्देशं नयति चेत् पत्रहारीत्युच्यते, निसृष्टार्था नाम प्रथमा दूती प्रायेण संस्तुतसम्भाषणयोर्नायिकानायकयोर्नेत्री। नायिकया प्रयुक्ता असंस्तुतसम्भाषणयोरपि परिचितमात्रयोः। कौतूहलाच्चानुरूपौ युक्ताविमौ नायिकानायकौ परस्परस्येत्यसंस्तुतयोरपि स्यात्, द्वितीया परिमितार्था दूती सा दृष्टपरस्पराकारयोः प्रविरलसन्दर्शनयोः, तृतीया पत्रहारिणी सा प्रगाढसद्भावयोः संसृष्टयोश्च देशकालसम्बोधनार्थम्। दूत्येन प्रहिता निसृष्टार्था परिमितार्था पत्रहारिणीति दूत्यस्तिस्र उक्ताः॥ ९४। ९५॥

पुनरपि दूतीविशेषमाह।

दौत्यमिषेणान्यस्या नायकमेत्यात्मगुणभावान्।
व्याजेन वेदयन्ती स्वार्थं घटयेत्स्वयंदूती॥ ९६॥

दौत्यमिषेणेति। अन्यस्याः नायिकायाः दौत्यमिषेण दूतीछद्मना नायकमेत्य नायकसमीपं गत्वा आत्मगुणभावान् आत्मनो

गुणान् भावांश्च व्याजेन छद्मना वेदयन्ती दौत्येन प्रहितान्यथा स्वयमेव नायकमभिगच्छेद् अजानतीनाम तेन सह स्वप्नोपभोगं कथयेत्, गोत्रस्खलितं भार्या चास्य निन्देत्तद्व्यपदेशेन स्वयमीर्ष्यां दर्शयेत्, नखदशनचिह्नं च किंचिद्दद्यात्, तेन द्वारेण नायकमाकारयन्तीति एवं गुणभावान् वेदयन्ती स्वार्थं घटयेत् सा स्वयंदूती तस्यास्तथैव प्रत्युत्तराणि योजयेत् ॥ ६६ ॥

मुग्धां नायकभार्यां यत्नाद्विश्वास्य या रहः पृष्ट्वा ।
अभिलाषलिङ्गमादौ तेन द्वारेण नायकं गमयेत् ॥ ६७ ॥

मुग्धामिति । मुग्धां मूढां नायकस्य भार्यां यत्नाद्विश्वास्य प्रयत्नेन विश्वासं जनयित्वा या दूती रहः अभिलाषलिङ्गं पृष्ट्वा आपृच्छ्य तां मूढां तद्द्वारेण तदभिलषितद्वारेण नायकं गमयेत्, तां भार्यादूतिकामाहुः । एवमुक्तं भवति । मुग्धां नवोढां नायकस्य भार्यामुद्विग्नां यत्नतो विश्वास्य या दूती तस्या अभिलाषलिङ्गमापृच्छ्य तत्संपादनद्वारेण लोभयित्वा नायकं गमयेत्, तां भार्यादूतीं प्राहुः । सामर्थ्यादुत्तरश्लोकात् भार्यादूतिकाशब्दावत्राकृष्येते ॥ ६७ ॥

यदि नायिका लज्जावशात् स्वयं दौत्यं न प्रतिपद्येत
तदा स्वभार्यया तामाकारयेदित्याह ।

अपि नायकः स्वभार्यां प्रयोज्य तद्वत् समायोज्य ।
प्रकटयति नागरत्वं तां भार्यां दूतिकां प्राहुः ॥ ६८ ॥

अपीति । नायकः स्वभार्यां मुग्धां लज्जावशादुद्विग्नां स्वनैपुण्यात् तद्वत् पूर्ववत् प्रयोज्य दूतिकामुखेन तां भार्यां समायोज्य आत्मना सङ्गतां कृत्वा नागरत्वं स्ववैलक्षण्यं प्रकटयति यदि, तामपि भार्यां दूतिकां प्राहुः, पूर्वा स्वमतिविभवेन नायकं गमयति, द्वितीया नायकमत्या तदुक्तं करोति ॥ ६८ ॥

यदि स्वभार्याया न गोचरस्तदा किं प्रतिपद्येतेत्यत आह ।

बालां परिचारिकां वा दोषज्ञां प्रेषयेत्सततम् ।
तत्र स्रजि कर्णपत्रे गूढं सन्देशमालिख्य ॥ ६९ ॥

बालामिति । बालां कन्यां परिचारिकाम् अदोषज्ञाम् अज्ञातदोषां परिचारिकां वा अदुष्टेनोपायेन सततं प्रेषयेत् प्रहिणुयात्, तत्र स्रजि मालायां, कर्णपत्रे वा गूढलेखविधानं गूढं दूत्या अज्ञातं यथा तथा सन्देशमालिख्य नायिकापि स्रजि कर्णपत्रे वा गूढं लेखमर्पयेत्, नखदशनपदानां निधानं कुर्यात्, इयं दूती केवलमालादिवस्तुनेत्री न स्वयं ब्रूते,यतः सा मूकदूती तस्यास्तथैव प्रत्युत्तरं प्रार्थनीयम्॥९९॥

अमुमेवार्थं पुनर्विशदं प्रकाशयति ।

अविदितकार्याकार्या बालाऽलङ्कारपत्रसंक्रान्तैः ।
नखदशनलेखपत्रैः प्रहिता चेन्मूकदूती सा ॥ १०० ॥

अविदितेति । अविदितकार्याकार्या अविदिते अज्ञाते कार्याकार्ये गुणदोषौ यया सा बाला अलङ्कारेषु पत्रेषु कर्णपत्रेषु संक्रामितैर्नखदशनपदैर्लेखपत्रैश्च प्रहिता नायकेन प्रेषिता चेत् सा मूकदूती ॥ १०० ॥

यत्र बालाया अगोचरस्तत्र किंप्रतिपद्येतेत्यत आह

द्व्यर्थं पूर्वप्रस्तुतमथवा दुर्लक्ष्यमन्येन ।
यन्मुग्धया कयाचित् अव्योक्ता वातदूती सा ॥ १०१ ॥
तत्राविशङ्कमुत्तरमपि दद्यान्नायिका तद्वत् ।

द्व्यर्थमिति । द्व्यर्थं द्विविधार्थप्रतिपादकं पूर्वप्रस्तुतं पूर्वप्रस्तुतार्थलिङ्गसंबन्धम् अथवा अन्येन दुर्लक्ष्यम्, वचनमिति शेषः । नायिकानायकाभ्यामेव लक्ष्यमिति यावत् । कयाचिद् उदासीनया मुग्धया अज्ञातवृत्तान्तया नायिका श्राव्या चेत् सा दूती वातदूतीत्युक्ता, तत्रापि सा नायिका अविशङ्कं यथा तथा तथैव वातदूत्या उत्तरं दद्यात् ॥ १०१ ॥

दूतीनां भेदानुक्त्वा अधुना दूतीत्वयोग्यजनमाह ।

दासी, सखी, कुमारी, विधवेक्षणिका, च सैरन्ध्री ॥ १०२ ॥
मालिकगान्धिकरजकस्त्री, प्रव्रजिता, च वस्तुविक्रेत्री, ।
धात्री, प्रतिवेश्मनिका, स्थिरभावा दूत्य एताः स्युः ॥१०३॥
शुकसारिकादयोऽपि प्रतिमाप्राया विदग्धानाम् ।

दासीति। दासी चेटी, सखी वयस्या, कुमारी कन्या, विधवा मृतपतिका, ईक्षणीका दैवज्ञा, सैरन्ध्री परवेश्मस्था, मालिको मालाकारः, गान्धिको गन्धकारः, रजको निर्णेजकः एतेषां स्त्री जाया, प्रव्रजिता तपस्विनी, वस्तुविक्रेत्री घृततैलादेर्विक्रेत्री, धात्रीउपमाता, प्रतिवेश्मनिका प्रतिवेशिनी, एताः स्थिरभावा दूत्यः स्युर्भवन्ति, विदग्धानां चतुरनागराणां शुकसारिकादयोपि शुकसारिकाप्रभृतयः प्रतिमाप्रायाः प्रतिरूपाण्यपि दूत्यो भवन्ति। तथा च वात्स्यायनः।

विधवेक्षणिका, दासी, भिक्षुकी, शिल्पकारिका,।
प्रविशत्याशु विश्वासं दूतीकार्यं च विन्दति॥ इति॥

संक्षेपेण दूतीकर्माण्याह—

प्रद्वेषं ग्राहयेत्पत्यौ रमणीयानि वर्णयेत्।
चित्रान् सुरतसंभोगानन्यासामपि दर्शयेत्॥
नायकस्यानुरागं च पुनश्च रतिकौशलम्।
प्रार्थनां चाधिकं स्त्रीभिरवष्टम्भं च वर्णयेत्॥

प्रथमं पटुतादयो गुणा उक्ता दूतीनां तेषां पटुता प्रधानमिति दर्शयन्नाह—

असङ्कल्पितमप्यर्थमुत्सृष्टं दोषकारणात्।
पुनरावर्त्तयत्येव दूती वचनकौशलात्॥
इति च॥ १०२। १०३॥

**अन्तःपुरमपि केचिद्दासीभिः कथितसदुपायाः ॥१०४॥**
**प्रविशन्ति तत्प्रकारा लोकद्वयनिन्दिता नोक्ताः।**

इति श्रीकोक्कोककृते रतिरहस्ये पारदारिकाधिकारो नाम
त्रयोदशः परिच्छेदः॥



अन्तःपुरमिति। दासीभिः कथितसदुपायाः उक्तसदुपायाः केचिदन्तःपुरमपि प्रविशन्ति, लोकद्वये इह लोके परलोके च निन्दितास्तत्प्रकाराः अन्तःपुरप्रवेशप्रकाराः नोक्ताः॥ १०४॥

इति श्रीकाञ्चीनाथकृतायां रतिरहस्यदीपिकायां
पारदारिकाधिकारो नाम
त्रयोदशः परिच्छेदः ॥



अतः परं योगाध्यायः ।

दृष्ट्वानेकविधानि मन्मथकलाशास्त्राणि शब्दार्णवं ।
सोड्डीशं हरमेखलांच निखिलां योगावलीनांशतम् ॥
तिस्रो वैद्यकसंहिता बहुविधानालोच्य शैवागमान् ।
योगाध्यायमहं महाजनमतं वक्ष्यामि संक्षेपतः ॥१॥

दृष्ट्वेति । व्याख्यातं कामसूत्रम्, तत्रोक्तैस्तु विधिभिरभिप्रेतमर्थमनधिगच्छन्नौपनिषदिकमाचरेदिति वात्स्यायनः । अनेकविधानि बहुप्रकाराणि नन्दिकेश्वरादिप्रणीतानि मन्मथकलाशास्त्राणि कामकलाशास्त्राणि, शब्दार्णवं सोड्डीशम् उड्डीशाख्येन ग्रन्थेन सहितं, निखिलां संपूर्णां हरमेखलां,योगावलीनां च शतं,तिस्रो वैद्यकसंहिताश्च दृष्ट्वा बहुविधान् शैवागमान् आलोच्य पूर्वोक्तानि सर्वाणि चालोच्य महाजनमतं बहुजनसंमतं योगानां सुभगङ्करणादीनामध्यायमहं संक्षेपतो वक्ष्यामि ॥ १ ॥

यूनोर्मिथोऽनुरागाभरणं कामोऽधिवसति रतिकेलिम् ।
सहजाधेयविभागादनुरागश्च द्विधा भवति ॥ २ ॥

यूनोरिति । यूनोः स्त्रीपुंसयोर्मिथः परस्परमनुरागाभरणम् अनुरागस्य आभरणम् आभरणभूतां रतिकेलिं कामोऽधिवसति, तत्र तिष्ठति । अनुरागोपि सहजः,आधेय इति विभागाद् द्विधा भवति॥२॥

वेगादीनि तदङ्गान्यप्यङ्गीकुर्वते द्विधा वृद्धाः ।
तस्य तदङ्गानामिति मन्त्रौषधिविधय उच्यन्ते ॥ ३ ॥

वेगादीति । तदङ्गानि तस्याऽनुरागस्याङ्गानि वेगादीनि वेगः

मन्दादिः स आदिर्येषां तानि वेगादीनि तस्यानुरागस्याङ्गानि वृद्धाः द्विधा अङ्गीकुर्वते,सहजानि आधेयानि चेति तस्यानुरागस्य तदङ्गानां च मन्त्रौषधिविधय उच्यन्ते ॥ ३ ॥

लक्षं जप्त्वा हुत्वा तद्दशमांशेन किंशुकैः सिद्धः ॥
तदनु च दीपशिखाभः प्रवेशितो रेचेकन भगम् ॥ ४ ॥
गत्वा शिरःसरोजं गलदमृतं कामकमलमागच्छन् ।
ध्यातो द्रवयति वशयति कर्षति कामेश्वरः कान्ताम् ॥५॥

लक्षमिति । कामेश्वरमन्त्रमेकलक्षं जप्त्वा तद्दशमांशेन तस्य लक्षस्य दशमांशेन दशसहस्रेण किंशुकैः पलासकुसुमैर्हुत्वा सिद्धः सिद्धमन्त्रोभवति, कामेश्वराख्यमन्त्रस्यायं पुरश्चरणक्रमः । तदनु पुरश्चरणादूर्द्ध रेचकेन मार्गेण दीपशिखाभः दीपज्वालायमानप्रभः भगं संसाध्याय: अङ्गनायाः योनिमेवं ध्यात्वा प्रवेशितः कामेश्वराख्यो मन्त्रः शिरःसरोजं गत्वा शिरसि स्थितं पद्मं गत्वा संप्राप्य गलदमृतो निःष्यन्दमानपरमामृतः कामकमलमागच्छन् एवंध्यातः कामेश्वरनामा मन्त्रः कान्ताम् अङ्गनां द्रवयति, कर्षति, वशयति, द्रावण आकर्षणे वशीकरणञ्च । ॐक्लीं नमः, अयं कामेश्वरो मन्त्रः । अथवा, कामश्चासावश्विरश्चेति कामेश्वरः, पूर्वोक्तक्रमेण कृतपुरश्चरणः स्मरमेवं ध्यायेत् । द्रावणकर्षणवशीकरणानि भवन्ति ॥ ॥ ४ । ५ ॥

अपरोपि कामेश्वरमन्त्रस्य विधिरुच्यते ।

आदौ कामेश्वरतः साध्यानाम द्वितीयया युक्तम् ॥
आनय नय वशतामिति परतः ठङ्कारमोङ्कारात् ॥ ६ ॥
अयुतं जप्त्वा हुत्वा तद्दशांशेन किंशुकं कदम्बं वा ॥
साधित एष निशायां कर्षति वरवर्णिनीं जप्तः ॥ ७ ॥

आदाविति । आदौ कामेश्वरः कामेश्वराख्यः पूर्वोक्तो मन्त्र उद्धरणीयः, तदनु; द्वितीयया विभक्त्या युक्तं साध्याया अङ्गनाया नाम नामधेयं, तदनु, आनय नय वशतामिति, परतः ॐङ्कारात्परतः ठङ्कारम् एवं मन्त्रमुद्धरेत् ॐक्लीं स्त्रियमानय नय वशतां ॐठं नमः,

अमुं मन्त्रमयुतं दशसहस्रं जप्त्वा तद्दशमांशेन तस्यायुतस्य दशमांशेन सहस्रेण किंशुकं पलाशकुसुमं, कदम्बं कदम्बकुसुमं वा हुत्वा निशायामेवं साधितः जप्तः अयं मन्त्रो वरवर्णिनीं कान्तां कर्षति॥७

उरसि ललाटे मन्मथ सद्मनि संचिन्तिता च कुण्डलिनी ॥
ध्रुवमाकर्षति वशयति विद्रावयति ज्वलद्रूपा ॥ ८ ॥

उरसीति। वरवर्णिनीनामुरसि, ललाटे, मन्मथसद्मनि स्मरमन्दिरे ज्वलद्रूपा संचिन्तिता ध्याता कुण्डलिनी ध्रुवं निश्चितम् आकर्षति, वशयति, विद्रावयति। उरसि चिन्तिता आकर्षति ललाटे चिन्तिता वशयति, मन्मथसद्मनि चिन्तिता विद्रावयति, ॐ ह्रींनमः, अयं कुण्डलिनी मन्त्रः ॥ ८ ॥

कान्तासु कामदेवो वाचि च वाचस्पतिर्गते गरुडः ॥
जप्तैः सप्तभिरस्या लक्षैस्साक्षात्स्मरो भवति ॥ ९ ॥

कान्तास्विति। अस्याः कुण्डलिन्याः जप्तैः सप्तभिर्लक्षैः सप्त लक्षजपेनेत्यर्थः। पुमान् कान्तासु वनितासु कामदेवः स्मरो भवति, वाचि च वाचस्पतिः वाग्विषये बृहस्पतिर्भवति, गते जवे गरुडश्च, अथवा गरे गरुड इति पाठे, गरे विषे गरुडः विषनिवृत्तौ गरुडसदृशः साक्षात्स्मरश्च भवति ॥ ९ ॥

विंशतिसहस्रजापात्तदर्द्धहोमेन पाटलायाश्च ॥
सिद्धिं व्रजति सबिन्दुः स्वरोष्टमः सर्वसिद्धिकरः ॥ १० ॥

विंशतीति। विंशतिसहस्रजापाद्विंशतिसहस्रजपेन, पाटलायाः पाटलपुष्पस्य तदर्द्धेन होमेन दशसहस्रहोमेन, सबिन्दुः बिन्दुना सहितः अष्टमः स्वरः सिद्धिं व्रजति, सर्वसिद्धिकरः अभीष्टसकलकार्यस्य सिद्धिकारी अष्टमः स्वरः ऋकार उच्यते, प्रणवादिः सबिन्दुर्नमोऽन्तम् इत्युपदेशः ॥ १० ॥

पीतासितसितरक्तैः कण्ठहृदयवदनमदनसदनेषु ॥
ईशं द्विषं च वाणीं वशयति रमणीमपि ध्यातः ॥ ११ ॥

पीतासितेति । कण्ठहृदयवदनमदनसदनेषु कण्ठे गले, हृदये उरसि, वदने मुखे, मदनसदने गुह्ये, यथाक्रमं पीतासितसितरक्तैः कण्ठे पीतवर्णः, हृदये असितवर्णः, कृष्णवर्ण इत्यर्थः । वदने सितवर्णः श्वेतवर्णः, मदनसदने रक्तवर्णः, एवमेतेषु स्थानेषु ध्यातः अष्टमः स्वरः ईशं प्रभुं, द्विषं शत्रुं, वाणीं सरस्वतीं, रमणीं स्त्रियं वशयति वशीकरोति, पीतवर्ण ईशं वशयति, कृष्णवर्णः द्विषं वशयति, सितवर्णः वाणीं वशयति, रक्तवर्णो रमणीं वशयति ॥ ११ ॥

ॐमदमद मादयमादय हंसौंह्रीं रूपिणीं स्वाहा ॥
साध्योऽयमयुतजापादरुणकुसुमदशमभागहोमेन ॥ १२ ॥

ओमिति । मदमद मादयमादय हं सौं ह्रीं रूपिणी स्वाहा अयं मादय मादयत्यादि मन्त्रः अयुतजापाद्दशसहस्रजपेन साध्यो भवति, अरुणकुसुमदशमभागहोमेन अरुणकुसुमस्य दशभागहोमेन सहस्रहोमेन च साध्यइत्यर्थः ॥ १२ ॥

अथ कामधामविनिहितवामकरानामिकेन परिपठितः ॥
झटिति द्रवयति युवतीं निपीडितामिक्षुयष्टिमिव ॥ १३ ॥

अथेति । अथ पुरश्चरणानन्तरं कामधामनि स्मरमन्दिरे विनिहितवामकरानामिकेन वामकरानामिकाङ्गुलिना परिपठितः अयं पूर्वोक्तो मन्त्रः युवतीं झटिति शीघ्रं द्रवयति द्रवीकरोति, कामिनीं निपीडितां यन्त्रावेधिना पीडितामिक्षुयष्टिमिव द्रावयतीत्यर्थः ॥१३॥

लक्षैकजापपूर्णा दशांशतिलहोमसिद्धहृल्लेखा ॥
आकर्षति दुर्गामपि सूर्योदयसमयजापेन ॥ १४ ॥

लक्षैकेति । लक्षैकजापपूर्णम् एकलक्षजपेन पूर्णं यथा तथा दशांशतिलहोमसिद्धहृल्लेखा दशांशेन दशसहस्रेणेत्यर्थः । दशांशेन होमेनसिद्धः हृल्लेखाख्यो मन्त्रः सूर्योदयसमयजापेन सूर्योदयकालजापेन दुर्गादेवीमप्याकर्षति स्वसमीपमानयति ॐहृल्लेखे मणिद्रवे कामरूपिणि स्वाहा अयं हृल्लेखाख्यो मन्त्रः ॥ १४ ॥

जप्तं लक्षद्वयमथ कदम्बकुसुमार्द्धहोमसंसिद्धम् ॥
तूष्णीं जप्तं तत्त्वं सतीमपि वशं क्षिप्रमानयति ॥ १५ ॥

जप्तमिति । लक्षद्वयं जप्तम् अथानन्तरं कदम्बकुसुमार्द्धहोम-संसिद्धं कदम्बकुसुमैरर्द्धहोमेन लक्षहोमेन सिद्धम् अथ तूष्णीं जप्तं तत्त्वं तत्त्वशब्देन मकार उच्यते, पञ्चविंशतितत्त्वानि ककारमारभ्य पञ्चविंशतिसंख्यो मकारः सतीं पतिव्रतामपि क्षिप्रं शीघ्रं वशमान-यति आकर्षति ॥ १५ ॥

नाडीं च ताडबीजं सरोचनं कन्यया च परिपिष्टम् ॥
वशयति मूर्ध्नि विकीर्णं सप्ताक्षरमन्त्रितं झटिति ॥ १६ ॥

नाडींचेति । नाडीं नाडिकाशाकं, ताडबीजं सरोचनं रोच-नया गोरोचनया सहितं; कन्यया अकृतविवाहया परिपिष्टं; सप्ता-क्षरमन्त्रितं कृत्वा मूर्ध्नि विकीर्णं झटिति वशयति ॐ क्रों ह्रीं श्रीं ढं स्वाहा अयं सप्ताक्षरो मन्त्रः ॥ १६ ॥

ॐ चामुण्डे हुलुहुलु चुलु चुलु वशमानयामुकीं स्वाहा ॥
अभिमन्त्र्य सप्तकृत्वो वशयति ताम्बूलदानेन ॥ १७ ॥

ॐमिति । ॐ चामुण्डे हुलुहुलु चुलुचुलु वशमानयामुकीं स्वाहा अनेन चामुण्डेत्यादिमन्त्रेण सप्तकृत्वः सप्तवारमभिमन्त्र्य ताम्बूलदानेन वशयति वशीकरोति ॥ १७ ॥

ॐ चामुण्डे जय जम्भे मोहय वशमानयामुकीं स्वाहा ॥
अभिमन्त्र्य पुष्पदानात् प्रणवादिरयं वशीकरणः ॥ १८ ॥

ओमिति । ॐ चामुण्डे जय जम्भे मोहय वशमानय अमुकीं स्वाहा अनेन अभिमन्त्र्य पुष्पदानात् अयं प्रणवादिः मन्त्रो वशीक-रणः ॐ चामुण्डे इत्यादिमन्त्रद्वये पूर्वसेवां विनापि सिद्धमित्यु-पदेशः ॥ १८ ॥

शवशिरसि स्थितमाल्यं जीवञ्जीवकमयूरयोरस्थि ॥
सव्यकरेण गृहीतं वात्यावर्त्तोत्थितं पत्रम् ॥ १९ ॥

चूर्णं विकीर्णमेषां वशयति नारीनरौ शिरःपद्योः ॥
दत्तं धवलं कुसुमं कृष्णाक्षीत्यादिमन्त्रेण ॥ २० ॥

शवशिरसीति । शवशिरसि प्रेतस्य शिरसि स्थितं माल्यं जीवञ्जीवकमयूरयोः अस्थि "जीवञ्जीवश्चकोरक" इत्यमरः । मयूरः केकी, वात्यावर्त्तोत्थितं वात्यायाः वातस्य आवर्तान्मण्डलादुत्थितं यत्किमपि साधारणं पत्रं सव्यकरेण वामकरेण गृहीतम् एषामौषधानां चूर्णं शिरः पद्योः शिरसि पद्योश्च विकीर्णं नारीनरौ वशयति, नारीणां शिरसि, पुरुषाणां पादयोरिति संप्रदायः । कृष्णाक्षीत्यादिमन्त्रेण दत्तं धवलकुसुमं च वशयतीत्यर्थः । ॐकृष्णाक्षी कृष्णमुखी कृष्णसर्वाङ्गी यस्य हस्ते पुष्पं दास्यामि तमवश्यं वशमानय यदि न भवति तदा ब्रह्महा रुद्रो भवति, अयं कृष्णाक्षीमन्त्रः॥१९॥२०॥

शम्भुः शक्त्यारूढः कुण्डलिनीमण्डितोथ बिन्दुयुतः ॥
अष्टाविंशतिवारं वशयति रामां रते जप्तः ॥ २१ ॥

शम्भुरिति । शक्त्यारूढः, कुण्डलिनीमण्डितः, अथ बिन्दुयुतः शम्भुर्मकारः अष्टाविंशतिवारं रते जप्तः रामां वशयति, रतिकाले अष्टाविंशति वारं जप्तोयं मन्त्रः रामां वशयति ॐह्रीं नमः पुरस्कृत्य शम्भवे इति मन्त्रः, अत्र कुण्डलिनीशब्देन अग्निबीजमुच्यते। शक्तिः चतुर्थः स्वरः, वायौ वामानासिकापुटगामिनि जप्तोऽयं मन्त्रः वशीकरण इति संप्रदायः ॥ २१ ॥

मदनातपत्रवदने स्फटिकाकारं वकारमनुचिन्त्य ॥
ध्यातं ध्वजेऽग्निबीजं वशयति रामां रते जप्तः ॥ २२ ॥
वामदृशो वामाङ्गे वामकरेणैव वामगे वायौ ।
तद्वद् भृशमुपचारः कुचोरुकरकामभवनेषु ॥ २३ ॥

मदनेति । मदनातपत्रवदने स्मरमन्दिरद्वारे स्फटिकाकारं स्फटिकवर्णं वकारमनुचिन्त्य ध्यात्वा ध्वजे अग्निबीजं रेफं ध्यात्वा रतौ रतिकाले रामां वशयति, वायौ वामगे सति वामभागे सरति सति वामदृशः कान्तायाः वामाङ्गे वामभागे कुचोरु-कर-कामभवनेषु भृशमात्मवामकरेणैवोपचारः क्रियमाणः तद्वद् वशीकरणः ॥ २२ ॥

मृतमाल्यमारुतोत्थितदलमधुकरपक्षयुगलमिलितेन ।
ध्रुवमनुधावति कीर्णा राजरदनयुग्मचूर्णेन ॥ २४ ॥

मृतमाल्येति । मृतस्य माल्यं, मारुतोत्थितदलं वात्यावार्त्तितं पत्रं, मधुकरो भ्रमरः; तस्य पक्षयुगलं पक्षद्वयं तेन मिलितेन राजरदनयुग्मचूर्णेन राजरदनौ पुरोवर्तिनावुपरितनौ दन्तौ तयोश्चूर्णेन शिरसि कीर्णा अङ्गना ध्रुवं निश्चितम् अनुधावति अनुगच्छति। अत्र निशि श्मशाने भूतदिने कन्यया भेषजपेषणमिति संप्रदायः । उद्वर्त्तनेनेति च संप्रदायः,राजरदनं प्रधानदन्तद्वयं,भूतदिनं चतुर्दशी॥२४

आदाय हुतवहादनमेकचितादग्धयोश्च दम्पत्योः ॥
या तेन हन्यते स्त्री तमेव सा नूनमनुयाति ॥ २५ ॥

आदायेति । एकचितादग्धयोः एकस्यां चितायां दग्धयोः दम्पत्योः हुतवहादनमादाय हुतवहादनमिति येन दण्डेन मृतकः संस्क्रियते स दण्डः, निघण्टुकारेणाप्युक्तं हुतवहविभागो मृतदण्डो हुतवहादनमिति, दम्पत्योरेकवर्णयोरित्युपदेशः, स दण्डो मधुना लिप्त इति सम्प्रदायः, तेन दण्डेन या अङ्गना येन पुरुषेण हन्यते ताड्यते साङ्गना तमेव पुरुषं नूनं निश्चितमनुयाति अनुगच्छति। भस्मापि शिरसि विकीर्णं दम्पत्योः प्रतिकूलयोः प्रीतिजननमित्युपदेशः ॥ २५ ॥

दक्षिणदिगस्थिफलके शुन उन्मत्तस्य ताप्यते यस्याः ।
नाम विलिख्य चिताया अङ्गारैरवश्यमायाति ॥ २६ ॥

दक्षिणदिगिति । उन्मत्तस्य शुनः मत्तसारमेयस्य दक्षिणदिगस्थिफलके दक्षिणभागास्थिपट्टे यस्या अङ्गनाया नाम नामधेयं चिताङ्गारैर्विलिख्य तैरेवाङ्गारैस्ताप्यते साङ्गना अवश्यमायाति अनुगच्छति, उन्मत्तस्य शुनो दक्षिणभागास्थिफलके अङ्गनाया नाम विलिख्य चिताङ्गारैस्ताप्यते यदि तदा सा अवश्यमनुधावतीत्यर्थः ॥ २६ ॥

मोहलतां गिरिकर्णीं रुदन्तिकां जालिकामवाक्पुष्पीम् ॥
रुद्रजटां च कृताञ्जलिमाज्यमधुभ्यां समायोज्य ॥ २७ ॥

कृततिलकस्त्रैलोक्यं वशयति तैः स्वाङ्गमलमिलितैः ॥
पानेऽथ भक्षणे वा दत्तैर्विश्वं वशं नयति ॥ २८ ॥

मोहलतामिति । मोहलता धत्तूरः, गिरिकर्णी इन्द्रवारुणी; यदि वा मोहलता मोहलतैव, मदन्तिका मदन्तीनाम सततजलस्राविणी काचिदौषधिः । रुदन्तिकेति वा पाठः । श्वेताऽपराजिता तद्गुणश्च-शीतला तिक्तापित्तोपद्रवघ्नी, चक्षुष्या, विषदोषघ्नी, त्रिदोषघ्नी च । रुदन्तिका रुदन्तीति तथाचोक्तम्-

चणपत्रसमं पत्रं क्षुपं चैव तथाविधः ।
शैशिरे जलबिन्दुमास्रवन्तीति रुदन्तिका ॥ इति ॥

तद्गुणश्च-कटुतिक्तोष्णा, क्षयघ्नी, कृमिघ्नी रक्तपित्तघ्नी मेहघ्नी, जराव्याधिहरत्वात् रसायनी च, जालिका कोषातकी अवाक्पुष्पी अपामार्गः, यदि वा मधुरिका, रुद्रजटा प्रसिद्धा, कृताञ्जलिः लज्जालुः ब्रह्मदण्डी कृताञ्जलिरिति धरणिः । यदि वा एकाहिकज्वरघ्नम् । तथाचोक्तम्—

रक्तसूत्रेण संवेष्ट्य बन्धादैकाहिकं जयेत् । इति ।

लज्जालुः स्वनामख्यातः क्षुपविशेषः । तद्गुणाश्च-कटुः शीतपित्तातिसारघ्नी शोफदाहश्रमश्वासव्रणकुष्ठकफास्रघ्नी च । एतान्यौषधानि आज्यमधुभ्यां समायोज्य पिष्ट्वा स्वाङ्गमलमिलितैः स्वाङ्गमलानि पञ्चाङ्गमलानि, अनामिकाशोणितं, हृदयश्लेष्मा, नासिकामलं, चक्षुर्मलं बाहुमलं च । एके पुनराहुः, स्वेदमुखद्रवरक्तमूत्रशुक्राणीति । पञ्चमलमिश्रितैः पूर्वोक्तैर्मोहलताद्यौषधैः कृततिलकः ललाटे रचिततिलकः पुरुषः त्रैलोक्यं त्रीणि जगन्ति वशयति, जगत्त्रयवश्यमेतत्तिलकमित्यर्थः । अथवा पाने घृततक्रजलादौ भक्षणे अशनादौ, दत्तैः पूर्वोक्तैरेव विश्वं सकलं जगद्वशं नयति, पुरुषो जगत्त्रयं वशं नयतीत्यर्थः ॥ २७ ॥ २८ ॥

चूर्णं दत्तं वशकृत् चूर्णं कीटस्य काकजंघायाः ॥
मुनिदलरससिक्तो वा टङ्कणकः स्वाङ्गमलमिलितः ॥ २९ ॥
चूर्णेन मक्षिकाया असितशुनीवत्सस्य सह चूर्णम् ॥
वशयति वसिष्ठभार्यामपि निजबीजान्वितं दत्तम् ॥ ३० ॥

चूर्णमिति। कीटस्य नन्दिकीटस्य चूर्णं पानादौ दत्तं वशकृद्ध-शकारि, काकजङ्घायाश्च गुञ्जायाः, तद्गुणाः-तिक्तोष्णा कृमिव्रणक-फापहा अजीर्णघ्नी च। चूर्णं च वशकृद्भवति, मुनिदलरससिक्तः मुनिरगस्त्यः, तद्दलरसेन सिक्तः टङ्कणको वशकृत। स्वाङ्गमलमिलितः प्रयोक्तुरङ्गमलमिलितो वा वशकृद्भवति। मक्षिकायाश्चूर्णेन सह असितशुनीवत्सः कृष्णशुनीवत्सश्चूर्णं वशकृद्भवति, निजबीजा-न्वितं प्रयोक्तुर्बीजेन रेतसा सहितं "बीजवीर्येन्द्रियाणि" चेत्यमरः। मक्षिकाचूर्णेन सहितम् असितशुनीवत्सश्चूर्णं दत्तं वशिष्ठभार्यामरु-न्धतीमपि वशयति किं पुनरन्यामिति भावः॥ २९। ३०॥

करिमदगदसिद्धार्थारुणकरवीरप्रसूनघृतसहितम्॥
सितरविजटाविशृङ्गी मधुपञ्चाङ्गोत्थमलमिलितम्॥ ३१॥
तिलकेन त्रैलोक्यं वशयति पर्युषितवारिणा पिष्टम्॥
पानेऽथ भक्षणे वा दत्तं परमं वशीकरणम्॥ ३२॥

करिमदेति। करिमदः गजमदः, गदो रसः, सिद्धार्थो गौरसर्षपः अरुणकरवीरप्रसूनानि रक्तकरवीर कुसुमानि, घृतं गव्यं, तत्सहितं सितरविजटा श्वेतार्कमूलम्, अविशृङ्गी वत्सशृङ्गी, मधु क्षौद्रं, पञ्चाङ्गो-त्थमलमिलितं पञ्चाङ्गमलसहितं करिमदादि सर्वं मिश्रीकृतं पर्युषित-वारिणा पर्युषितजलेन पिष्टं तत्तिलकेन त्रैलोक्यं वशयतीत्यर्थः। अथवा पाने भक्षणे वा दत्तं परमं वशीकरणं भवति॥ ३१ ३२॥

वज्रीखण्डैर्गोलागन्धकचूर्णेन भावितैर्भूयः॥
शोषणपूर्वविचूर्णितमध्वक्तैर्लिङ्गलेपो वा॥ ३३॥
चूर्णमिदमरुणवानरविष्ठाक्तं मूर्ध्नि कीर्यते यस्याः॥
तामुद्वहेत कन्यां कमनीयाङ्गीमभव्योऽपि॥ ३४॥

वज्रीति। वज्रीखण्डैः स्नुहीखण्डैः, गोला मनः शिलाः, गन्धकः प्रसिद्धः, तयोश्च चूर्णेन बहुशो भावितैः वज्रीखण्डैः शोषणपूर्वं विचूर्णितैर्मध्वक्तैर्मधुमिश्रितैर्लिङ्गलेपो वशकृत्। अथवा देहे वा-

वशकृत् । अथवा इदं चूर्णमरुणवानरविष्ठाक्तं रक्तवानरविष्ठालोलितं यस्या मूर्धनि विकीर्यते तां कमनीयाङ्गीं कन्यामभव्योपि अरमणीयोपि उद्वहेत्कमनीयाङ्गी अप्यसौ कुरूपस्यापि वशगा भवतीत्यर्थः ॥ ३३ ॥ ३४ ॥

वटयुवतीमलयोद्भवसूक्ष्मैलासर्जकुष्ठसिद्धार्थैः ।
सर्वाङ्गीणो धूपः सर्वजनानां वशीकरणः ॥ ३५ ॥
कुष्ठोत्पलदलमधुकरपक्षतगरमूलकाकजङ्घानाम् ।
चूर्णं शिरसि विकीर्णमनामिकारक्तमिश्रमपि तादृक् ॥३६ ॥

वटयुवतीति । वटः न्यग्रोधः, तद्गुणाः-कषायः मधुरः शीतलः पित्तकफघ्नः ज्वरदाहतृष्णामोहव्रणशोफघ्नश्च । युवती प्रियङ्गुःमलयोद्भवं चन्दनं, सूक्ष्मैला क्षुद्रैला, सर्जरसः रालः, कुष्ठं प्रसिद्धं, सिद्धार्थो गौरसर्षपः एतैः सर्वाङ्गीणो धूपः सर्वाङ्गव्यापी धूपः सर्वजनानां वशीकरण इत्यर्थः । कुष्ठं प्रसिद्धम्, उत्पलदलं, नीलोत्पलपत्रं, मधुकरपक्षः भृङ्गराजपत्रम्, मधुकरपक्षो वा, तगरमूलं, काकजङ्घा समुद्रतीरजा काचिदोषधिः, एतेषां चूर्णमनामिकाङ्गुलीरक्तसक्तं तादृग्भवति पूर्वोक्तधूपसदृशंसर्वजनवशीकरणमित्यर्थः ॥ ३५ ॥ ३६ ॥

उत्पलदलदण्डोत्पलपुनर्नवासारिवोत्थकल्कसंसिद्धम् ।
तैलं नयनाभ्यञ्जनमाहुः परमं वशीकरणम् ॥ ३७ ॥

उत्पलेति । उत्पलदलं प्रसिद्धं, दण्डोत्पलं सहदेवी,तद्गुणाः-श्वासकासक्षयघ्नम् अग्निदीप्तिकरं च । पुनर्नवा शोफघ्नी; सा द्विधा, श्वेता; रक्ता चेति । तत्र श्वेताया गुणाः—

श्वेता पुनर्नवा सोष्णातिक्ता कफविषापहा ।
कासहृद्रोगशूलास्रपाण्डुशोफानिलार्तिनुत् ॥
रक्ता पुनर्नवा तिक्ता सारिणी शोफनाशिनी ।
रक्तप्रदरदोषघ्नी पाण्डुपित्तप्रमर्दिनी ॥ इति ॥

सारिवा गोपी एतेषां कल्कैः सिद्धं तैलं नयनाभ्यञ्जनं परमं वशीकरणमाहुः वदन्ति ॥ ३७ ॥

मातङ्गनिहतनरनयननासिकाहृदयलिङ्गजिह्वाभिः ।
पुष्यर्क्षयुक्तरात्रौ भवभवने साधितं तैलम् ॥ ३८ ॥
मदनाङ्कुश इति नाम्ना महावशीकरणमेतदिति मुनयः ।
भक्षणपानस्पर्शनविधिना विश्वं वशं नयति ॥ ३९ ॥

मातङ्गेति । मातङ्गेन गजेन निहतस्य नरस्य नयने, नासिका, हृदयं, लिङ्गं, जिह्वा एतैः सह पुष्यर्क्षयुक्तरात्रौ पुष्यनक्षत्रसहितायां निशायां भवभवने शिवालये साधितं तैलं नाम्ना मदनाङ्कुश इति महावशीकरणम् एतत्तैलमिति मुनय आहुः । एतत्तैलं भक्षणविधिना पानविधिना, स्पर्शविधिना च प्रयोजितं विश्वं त्रैलोक्यं वशं नयति ॥ ३८ । ३९ ॥

वसुकुष्ठमलयजघुसृणसुरतरुकुसुमसलिलसञ्जनितः ।
चिन्तामणिरिति भणितो धूपः परमो वशीकरणः ॥४०॥

वसुकुष्ठेति । वसु श्वेतार्कः,कुष्ठं कोष्ठमिति प्रसिद्धम्,तद्गुणाश्च
कुष्ठमुष्णं कटु स्वादु शुक्रलं तिक्तकं लघु ।
हन्ति वातास्रवीसर्पकासकुष्ठमरुत्कफान् ॥ इति ॥
मलयजश्चन्दनं, घुसृणं कुङ्कुमं, सुरतरुः देवदारुः, कुसुमसलिलं मधु, एतैर्जनितः चिन्तामणिरिति भणितो गदितो धूपः परमो वशीकरणः ॥ ४० ॥

रमणीरमणे, वरणे कन्यायाः, पण्यवस्तुविक्रयणे ॥
सिद्धिकरं धूपमिमं मनुते हरमेखलाकारः ॥ ४१ ॥

रमणीति । रमणीनां रमणे सम्भोगे, कन्याया वरणे, पण्यवस्तूनां च विक्रयणे इमं धूपं चिन्तामणिनामानं हरमेखलाकारः सिद्धिकरं मनुते ॥ ४१ ॥

आन्त्रोज्झितचटकोदरनिवेशितं बीजमात्मनः कृत्वा ॥
दत्वा वज्रोदकमथ शरावयुगसंपुटं कृत्वा ॥ ४२ ॥

सप्ताहमुपरि चुल्यां निधाय घुटिकां विधाय भक्ष्यविधौ ॥
दत्तं वशयति कर्षति वशिष्ठभार्यामपि क्षिप्रम् ॥ ४३ ॥
क्षौमीं लिप्त्वा वर्त्तिं गददलतालीसतगरकैस्तैलम् ॥
सिद्धार्थस्य गृहीत्वा नृकपाले कज्जलं विहितम् ॥ ४४ ॥
नयनगत युवतीनामपि मुनिचेतांसि मोहयते ॥ ४५ ॥

आन्त्रेति । आत्मनः प्रयोक्तुर्बीजं रेतः आन्त्रोज्झितस्य झर्झरीकृतस्य चटकस्य कलविङ्कस्य उदरे उदरमध्ये निवेशितं निक्षिप्तं कृत्वा अथवा वज्रोदकं स्वमूत्रं दत्वा अथ शरावयुगं सम्पुटीकृत्य शरावद्वयं सम्पुटं कृत्वा तन्मध्ये निक्षिप्य सप्ताहं सप्तदिनं चुल्याम् अश्मन्तकस्य उपरि निधाय दहेत, तद्रस वटिकां विधाय भक्ष्यविधौ अशनादौ दत्तं वशिष्ठभार्यामपि क्षिप्रं सत्वरम् आकर्षति, वशयति च गदः रसः, दलं पत्रं, तालीसं प्रासद्धम्, तगरं पिण्डीतगरम्, एतैः क्षौमीं क्षौमकृतां वर्त्तिं लिप्त्वा सिद्धार्थस्य गौरसर्षपस्य तैलं टङ्कपरिमाणं गृहीत्वा तेन तैलेन सहिते नृकपाले नरशिरःकपाले विहितं कृतं कज्जलमञ्जनं युवतीनां नयनगतं मुनिचेतांसि मुनिमनांस्यपि मोहयति ॥ ४५ ॥

स्वार्त्तवशोणितभावितरोचनया रचिततिलका ॥
नारी वशयति भुवनं न तत्र चित्रं किमप्यस्याः ॥ ४६ ॥

स्वार्तेति । स्वस्य आर्त्तवशोणितेन आत्मनः ऋतुकाले योनिमुखस्रुतरक्तेन बहुशो भावितया रोचनया गोरोचनया रचिततिलका कृततिलका सा मुनिचेतांस्यपि मोहयतीत्यर्थः ॥ ४६ ॥

यदि सहदेवीमूलं ग्रहणे संगृह्य रोचनापिष्टम् ॥
तत्कृततिलका नारी गुरुकुलमपि विकलतां नयति ॥४७॥

यदीति । सहदेवीमूलं ग्रहणे सोमग्रहणे सूर्यग्रहणे वा संगृह्य गोरोचनया सह पिष्टं यदि तत्कृततिलका तेन कृततिलका नारी गुरुकुलं गुरूणां कुलमपि विकलतां कामाकुलतां परवशतां नयति, तां दृष्ट्वा तद्गुरवोपि विकला भवन्तीत्यर्थः ॥ ४७ ॥

दत्त्वा द्विजाय पायसभोजनमुत्पाद्य सितबलामूलम् ॥
कन्यापिष्टं भक्ष्ये दत्तमनिच्छाहरं परमम् ॥ ४८ ॥

दत्त्वेति । द्विजाय विप्राय पायसं भोजनं दत्त्वा पायसभोजनमहं तुभ्यं दास्यामीत्युक्त्वा अनन्तरं सितबलामूलं सितपुष्पाया बेलाया मूलम् उत्पाट्य कन्यया पिष्टं भक्ष्ये दत्त स्त्रीणां परममनिच्छाहरम् अनिच्छां हरति पुरुषस्योपरि द्वेषं हरतीत्यर्थः ॥ ४८ ॥

जटिपिप्पलयोर्लूतागृहाण्डकैरेकमूलयोर्लिप्त्वा ॥
वक्षोघनमालिङ्गनमनिच्छतां हरति हरिणाक्ष्याः ॥ ४९ ॥

जटिपिप्पलयोरिति । जटी प्लक्षः, पिप्पलः अश्वत्थः, एकमूलयोरेकं मूलं ययोस्तयोर्जटिपिप्पलयोः प्लक्षाश्वत्थयोः परस्परश्लिष्टमूलयोरित्यर्थः । लूतागृहाण्डकैस्तत्र स्थितैरिति भावः । वक्ष प्रयोक्तुर्वक्षः लिप्त्वा घनं निबिडमालिङ्गनं क्रियमाणं हरिणाक्ष्याः मृगाक्ष्याः अनिच्छतां पुरुषद्वेषिणीत्वं हरति ॥ ४९ ॥

सितदूर्वा सितबृहती सितगिरिकर्णी समूलपुष्पा च ॥
ताम्बूलेन वितीर्णा स्त्रीपुरुषौ वश्यतां नयति ॥ ५० ॥

सितदूर्वेति । सितदूर्वा प्रसिद्धा, सितबृहती श्वेतफला कण्टकारिका । तथाचोक्तम्—

विज्ञेया श्वेतबृहती वातश्लेष्मविनाशिनी ।
रुच्या चाञ्जनयोगेन नानानेत्रामयापहा ॥ इति ॥

गिरिकर्णी श्वेतापराजिता, तद्गुणाः—शीतला तिक्ता पित्तोपद्रवघ्नी चक्षुष्या विषदोषघ्नी त्रिदोषघ्नी च । समूलपुष्पा सितगिरिकर्णी च ताम्बूलेन दत्ता स्त्रियं पुरुषं च वश्यतां नयति,उभयोर्वशीकरणमेतत्॥५०॥

करभास्थिभृङ्गपत्त्रद्रवभावितमेकविंशतिं वारान् ॥
पुटदग्धं समशैलाञ्जनसहितं चूर्णितं सम्यक् ॥ ५१ ॥
करभास्थिनालिकायां निहितं करभास्थिशलाकया विहितम्॥
इदमञ्जनमखिलजनं जनयति वाग्वश्यवद्वश्यम् ॥ ५२ ॥

करभेति। एकविंशतिं वारान् त्रिःसप्तकृत्व इत्यर्थः। भृङ्गपत्रद्रवेण भार्कवपत्ररसेन भावितं करभास्थि उष्ट्रास्थि समेन शैलाञ्जनेन सहितं सम्यक् पुटदग्धं पुटपाकविधिना भस्मीकृतं चूर्णीकृतं करभास्थिनालिकायाम् उष्ट्रास्थिकृतकरण्डे निहितं निक्षिप्तं करभास्थिशलाकया करभास्थिकृतया शलाकया नयनयोर्विहितमञ्जनं निखिलजनं वाग्वश्यवत् वचनवश्यवत् वश्यं जनयति, सर्वेषां वश्यमित्यर्थः। उपक्षयेण विधिना मैथुनं सिद्ध्यति। जनयति वशतां च नारीणामिति पाठे नारीणां च वशतां जनयति । इदमञ्जनं सर्वेषां वशीकरणमित्यर्थः। उपलक्षणं विना मैथुनं सिद्ध्यति ॥५१॥५२॥

निजबीजेन रतान्ते वामदृशो झटिति वामपादं यः ॥
अथवा लिम्पति हृदयं स एव तस्याः परो दयितः ॥५३॥

इति श्रीकोक्कोककृते रतिरहस्ये वशीकरणाधिकारो नाम
चतुर्दशः परिच्छेदः ॥१४॥



निजबीजेति। यः पुरुषः रतान्ते रतावसाने निजबीजेन आत्मनो रेतसा वामदृशो वल्लभायाः वामपादं झटिति लिम्पति, अथवा तस्या एव हृदयं लिम्पति स एव तस्याः परो दयितो भवति ।

रूपं गुणो वयस्त्याग इति सुभगङ्करणम् । तगरकुष्ठतालीसपत्रकानुलेपनं शरीरस्य सुभगङ्करणम् । एतैरेव सुपिष्टैर्वर्तिमालिप्याक्षतैलेन नरकपाले साधितमञ्जनंच, पुनर्नवा सहदेवी शारिवाकुरण्डोत्पल पत्रैश्च सिद्धं तैलमभ्यञ्जनम् । तद्युक्ता एव स्रजश्च । पद्मोत्पलनागकेसराणां शोषितानां चूर्णं मधुघृताभ्यामवलिप्य मासादूर्ध्वं सुभगो भवति, तान्येव तगरतालीसतमालपत्रयुक्तान्यनुलिप्य, मत्तस्य श्रीष्ममत्तस्या मयूरस्याक्षि, तरक्षोर्वाऽक्षि, सुवर्णेनानुलिप्य दक्षिणेन हस्तेन धारयेदिति सुभगङ्करणम् । तथा बादरं मणिं शङ्खमणिंच तेषां चाथर्वणान् योगानागमयेत्, विद्यातन्त्राच्च विद्यायोगादिति वात्स्यायनः ॥५३॥

इति श्रीकाञ्चीनाथकृतायां रतिरहस्यदीपिकायां
वशीकरणाधिकारो नाम
चतुर्दशः परिच्छेदः।

अथ महिलाद्रावणविधिरुच्यते-

कर्पूरटङ्कणाभ्यामथवा मधुकेसरास्थिसाराभ्याम् ॥
घोषफलक्षोदैर्वा रसेन दण्डोत्पलाया वा ॥ १ ॥
मूर्छितमथवा मिलितं शशिना भवबीजमेकं वा ॥
एकष्टङ्कणको वा एकं वा घोषकोत्थरजः ॥ २ ॥
यदि वा मधुगुडसहिता चिञ्चा कठिनाङ्गनावराङ्गेषु ॥
क्षेपाद्वा ध्वजलेपाद्रेतःस्रोतः प्रवर्त्तयति ॥ ३ ॥

कर्पूरेति। कर्पूरटङ्कणाभ्यां कर्पूरः प्रसिद्धः, टङ्कणः टङ्कणक्षारं, सोहागा इति हिन्दीभाषायां प्रसिद्धः। ताभ्यां मूर्छितं भवबीजम् एको योगः। अथवा मधुकेसरास्थिसाराभ्यां मधु क्षौद्रं, केशरास्थि बकुलवृक्षास्थि तयोः सारः ताभ्यां मिश्रितं भवबीजं द्वितीयो योगः। घोषफलं घोषलता तत्क्षोदैर्वा मिलितं भवबीजं तृतीयो योगः। दण्डोत्पलाया रसेन दण्डोत्पला, पीतपुष्पदण्डोत्पलं, यदि वा रत्नमालादिग्रन्थेषु बृहत् क्षुवती गुटीति तस्या रसेन वा मिलितं भवबीजं चतुर्थो योगः। शशिना कर्पूरेण मिलितं वा पञ्चमो योगः। एकं भवबीजं वा भवबीजं पारद मिति षष्ठो योगः। एकष्टङ्कणको वा सप्तमो योगः। टङ्कणकः टङ्कणक्षारं, सोहागा इति हिन्दीभाषायाम्। एकं वा घोषकोत्थरजः एकं घोषरजो वा अष्टमो योगः। यदिवा मधुगुडसहिता चिञ्चा मधुना सहिता चिञ्चा, गुडसहिता चिञ्चा इति योगद्वयम्। मधुगुडचिञ्चासहितमिति वा पाठः। चिञ्चया सहितं मधु, गुडेन सहितं वा मधु चेति योगद्वयम्। चिञ्चावृक्षाम्लः, कठिनाङ्गनानां वराङ्गेषु स्मरमन्दिरेषु क्षेपात् स्वलिङ्गलेपाद्वा इदमौषधं रेतःस्रोतः रेतसः प्रवाहं प्रवर्तयति ॥ १ ॥ २ ॥ ३

इत्येते दश गदिता द्रावणयोगाः प्रसिद्धमहिमानः ॥
द्रावणवशताकर्षणमादध्याद्योगषट्कं च ॥ ४ ॥

इत्येतदिति । इति पूर्वोक्तप्रकारेण एते दश द्रावणयोगाः प्रसिद्धमहिमानो गदिताः उक्ताः, वक्ष्यमाणं योगषट्कं च द्रावणवशताकर्षणमादध्यात् द्रावणं, वशताम्, आकर्षणं च करोति ॥ ४ ॥

लोध्रश्रीफलमज्जानेकपमदसिन्दुवारसमभागः ॥
अथवा मधुमागधिकाधत्तूरकलोध्रमरिचानि ॥ ५ ॥
रक्तकपिलिङ्गमुडुपतिकाञ्चनमधुसूतसहितं वा ॥
हयलालामञ्जिष्ठासितसर्षपजातिकुसुमं वा ॥ ६ ॥
घृष्टं कपिलासर्पिषि लोहितकपिलिङ्गमेकं वा ॥
मधुसैन्धवकलरवमलमिलितं वा लिङ्गलेपेन ॥ ७ ॥

लोध्रेति । लोध्रः प्रसिद्धः, लोध इति हिन्दीभाषायाम् । श्रीफलमज्जा बिल्वमज्जा, अनेकपमदः हास्तिमदः, सिन्दुवारः निर्गुंडी, तद्गुणाःकटुः तिक्तः कफवातक्षयापहः कण्डूकुष्ठघ्नः शूलकासघ्नश्च । एतेषां प्रत्येकं समो भागः सिन्दुवाररसपिष्टोयमेको योगः । अथवा मधु क्षौद्रं,मागधिका पिप्पली, धत्तूरः उन्मत्तः, लोध्रः प्रसिद्धः, मरिचानि च इति द्वितीयो योगः । उडुपतिः कर्पूरः काञ्चनः उन्मत्तः, मधु क्षौद्रं, सूतं पारदं तैः सहितं रक्तकपेः अरुणवानरस्य लिङ्गं ध्वजं वा तृतीयो योगः । हयलाला तुरगमुखलाला, मञ्जिष्ठाकालेयकाख्या लता, सितसर्षपः गौरसर्षपः, जातिकुसुमं मालतीकुसुमं वा चतुर्थो योगः । कपिलासर्पिषि घृष्टमेकं लोहितकपिलिङ्गं वा पञ्चमो योगः। मधु क्षौद्रं, सैन्धवं प्रसिद्धं, तद्गुणाः-वृष्यं चक्षुष्यं रुच्यं दीपनं त्रिदोषघ्नं पूतं, व्रणाविबन्धघ्नं च । कलरवमलं परभृतमलं, पारावतमलं वा, "पारावतः कलरवः" इत्यमरः । सैन्धवेन कलरवमलेन मिश्रितं मधु वा अयं षष्ठो योगः । एते षड् योगाः लिङ्गलेपनेन द्रावणवशताकर्षणकारिणो भवन्तीत्यर्थः ॥ ५ ॥ ६ ॥ ७ ॥

पुष्योद्धृतरुद्रजटामूलं विचर्व्याथ कर्णयोर्यस्याः ॥
क्रियते फूत्कृतमल्पं तत्क्षणमेव च्युतिस्तस्याः ॥ ८ ॥

पुष्येति । पुष्योद्धृतायाः पुष्यनक्षत्रे उद्धृताया रुद्रजटाया मूलं विचर्व्य मुखे चर्वणं कृत्वा यस्याः कर्णयोः फूत्कारम् अल्पं क्रियते तस्याः तस्मिन् क्षणं एव च्युतिर्बीजच्युतिर्भवतीत्यर्थः ॥ ८ ॥

अथ वाजीकरणाधिकारे वीर्यवृद्धिरुच्यते-

नागबलां सबलामथ शतावरीं वानरीं समं पयसा ॥
गोक्षुरकेक्षुरके निशि निपीय रतिमल्लतामेति ॥ ९ ॥

नागबलामिति । नागबलां, सबलां शतावरीं, वानरीम् आत्मगुप्तां, गोक्षुरकं त्रिकण्टकम्, इक्षुरकं कोकिलाक्षम् एतानि समभागानि कृत्वा निशि पयसा गव्येन क्षीरेण निपीय पीत्वा रतिमल्लतां सुरतप्रचण्डतामेति गच्छति । तथाचोक्तं रावणकृते अर्कप्रकाशे-

गोक्षुरेक्षुरकाभीरूवानर्यतिबलाबलाः ।
पयोऽनुपानं यो लिह्यान्नित्यवेगः स ना भवेत् ॥

इति ॥ ॥ ९ ॥

मधुकस्य कर्षमेकं सहितं तुल्येन सर्पिषा मधुना ॥
लीढ्वानुपीय दुग्धं निधुवनशक्तिं परां धत्ते ॥ १० ॥

मधुकेति । मधुकस्य यष्टिमधुकस्य एकं कर्षं तुल्येन कर्षांशेन सर्पिषा मधुना च सहितं लीढ्वा मधुकचूर्णं सर्पिर्मधुभ्यां मिश्रितं लीढ्वा अनु पश्चाद् दुग्धं पीत्वा परां निधुवनशक्तिं सुरतशक्तिं धत्ते ॥ १० ॥

पञ्चाशत्पलमाज्यं तद्द्विगुणसितासमन्वितं मधुना ॥
पादेन वारिपादिकमेतत्संसाध्य मर्दितेन चिरम् ॥ ११ ॥
गोधूमचूर्णपादेनोत्पाद्योत्कारिकां च भुञ्जानः ॥
कन्दर्पसमरकेलीदर्पितदुर्मदयुवतिजनं जयति ॥ १२ ॥

पश्चाशदिति । आज्यं गव्यं घृतं पञ्चाशत्पलं तद्द्विगुणासितासमन्वितं तस्याऽऽज्यस्य द्विगुणया शर्करया समन्वितं; पादेनाऽऽज्यस्य पादांशेन मधुना समन्वितं; वारि पादिकं जलं च पादांश एतत् सर्वं संशोध्य गोधूमचूर्णपादेन चिरं मर्दितेन उत्कारिकां रोटिकामुत्पाद्य भुञ्जानः प्रतिदिनमश्नन् कन्दर्पसमरकेलिषु सुरतक्रीडायां दर्पितयुवतिजनं जयति । तथाचोक्तं रावणकृतेऽर्कप्रकाशे—

गवां विरूढवत्सानां सिद्धं पयसि पायसम् ।
गोधूमचूर्णं तु तथा सितामधुकृतान्वितम् ॥
भुक्त्वा हृष्यति जीर्णोऽपि दश दारान् व्रजत्यपि ।
ब्रह्मचर्यं प्रकर्तव्यमेकविंशद्दिनावधि ॥

इति ॥ ११ ॥ १२ ॥

दशगुणदुग्धे पक्वं शतावरीगर्भितं च घृतमश्नन् ॥
मागधिकामधुसहितं सशर्करं भवति रतिमल्लः ॥ १३ ॥

दशगुणेति । घृतस्य दशगुणे दुग्धे पक्वं घृतमेकगुणमित्यर्थः । शतावरीगर्भितं; मागधिकामधुभ्यां सहितं; सशर्करं शर्करया सहितं घृतम् अश्नन् रतिमल्लो भवति, मागधिकादीनि त्रीणि समानि प्रतिपाकद्रव्याणि एतद् घृतमश्नन् रतिमल्लो भवतीत्यर्थः । तथा चोक्तं रावणकृतेऽर्कप्रकाशे—

स्वर्णमाक्षिकलोहं च पारदश्च शिलाजतु ।
पथ्याविडङ्गधत्तूरविजयाजातिपत्रिकाः ॥
अश्वगन्धगोक्षुराणामर्कैर्भाव्यं पृथक् पृथक् ।
सप्तग्रसं तु वल्लैकं मध्वाज्याभ्यां लिहेत च ॥

इति ॥ १३ ॥

बस्ताण्डसिद्धदुग्धे भूयो वा भावितांस्तिलानश्नन् ।
घृतदुग्धसाधितौ वा बस्ताण्डौ सलवणौ सगुडौ ॥१४॥

स्वरसेन भावितं वा विदारिकाचूर्णमाज्यमधुमिलितम् ।
गोक्षुरविदारिकोत्थं चूर्णं वा शर्करासहितम् ॥ १५ ॥
स्वरसेन भावितं वा धात्रीचूर्णं सिताऽऽज्यमधुमिलितम् ।
लीढ्वाऽनुपीय दुग्धं न तृप्यति स्त्रीशतेनापि ॥ १६ ॥

बस्ताण्डेति । बस्ताण्डसिद्धदुग्धे बस्ताण्डेन सिद्धे क्वथिते दुग्धे भूयः भावितांस्तिलान् कृष्णतिलान् अश्नन् सितया सहितान् अश्नन् इत्युपदेशः । रतिमल्लतामेति, क्षीरघृतसाधितौ क्षीरघृताभ्यां साधितौ सलवणौ ईषल्लवणसहितौ सकणौ पिप्पलीसहितौ बस्ताण्डौ वा अश्नन् रतिमल्लतामेति । तथाचोक्तं रावणकृतेऽर्कप्रकाशे—

बस्ताण्डः सर्पिषा भृष्टः कणसैन्धवमिश्रितः ।
भक्षयेत्सततं यस्तु रमते सोऽङ्गनाशतम् ॥इति॥

विदारिका शालपर्णी तस्याश्चूर्णं, स्वरसेन विदारिकारसेन भावितं वा, आज्यमधुभ्यां मिलितं शर्करासहितं गोक्षुरविदारिकोत्थं चूर्णं वा, स्वरसेन धात्रीरसेन भावितं धात्र्या एव चूर्णं सितया आज्येन मधुना च मिलितं लीढ्वा अनु पश्चाद् दुग्धं पीत्वा स्त्रीशतेनापि न तृप्यति ॥ १४ । १५ । १६ ॥

यवकलममाषचूर्णैस्तुल्यैर्गोधूममागधीसहितैः ।
पूपलिकां घृतपक्वां भुक्त्वा क्षीरं सशर्करं पिबतः ॥ १७ ॥
घृतमधुसहदेव्यन्वितसरोजकिञ्जल्कलिप्तनाभेर्वा ।
रममाणस्य न तृप्यति मनः शतेनापि रमणीनाम् ॥१८॥

यवेति । यवाः प्रसिद्धाः, तद्गुणाः—

रूक्षः शीतो गुरुः स्वादुः कषायो मधुरो यवः ।
वृष्यो ग्राही कफघ्नश्च स्यात्पित्तश्वासकासनुत् ॥इति॥

कलमाः शालयः, तत्र तण्डुलग्रहणमुपदेशः । यवानां कलमानां माषाणां तुल्यैश्चूर्णैः गोधूमेन मागधिन्या पिप्पल्या सहितैश्च घृतपक्वां पूपलिकां पूपीं भुक्त्वा अनन्तरं सशर्करं क्षीरं पिबतः, अथवा

घृतमधुसहदेवीभिः अन्वितं यत्सिताब्जकिंजल्कं तेन लिप्तनाभेः रममाणस्य पुरुषस्य मनः युवतीनां शतेनापि न तृप्यति ॥१७।१८॥

अथ बीजस्तम्भ उच्यते—

मुष्कशिराया मूलं दृढमङ्गुल्या निपीड्य रतिकाले ।
चिन्तान्तरनिहितमनाः कुम्भितपवनश्च्युतिं जयति ॥१६॥

मुष्केति । मुष्कशिरायाः मुष्कोऽण्डकोषः तत्र गतायाः शिरायाः मूलम् अङ्गुल्या रतिकाले सुरतकाले दृढं निपीड्य चिन्तान्तरनिहितमनाः चिन्तान्तरे कल्लोलिनीकाननकन्दरादौ निहितमनाः कुम्भितपवनो वायुधारणं कृत्वा पुरुषः च्युतिं बीजच्युतिं जयति, बीजस्तम्भं करोतीत्यर्थः ॥ ६ ॥

सितशरपुङ्खामूलं वटपयसा पिष्टमानेन निहितम् ।
एककरञ्जकबीजाभ्यन्तरगं स्तम्भयेद्बीजम् ॥ २० ॥

सितशरेति । सितशरपुङ्खामूलं वटपयसा वटदुग्धेन पिष्टं यस्यां बीजकोश्यामेकमेव करञ्जकबीजं तिष्ठति तदेककरञ्जकबीजं तस्याभ्यन्तरगतं स्वानने निहितं सद् बीजं स्तम्भयेत् ॥ २० ॥

कृत्वा दृढगुदपीडनमानाभेश्चिन्तितश्च्युतिं जयति ।
आमस्तकमोङ्कारः श्यामतनुः कच्छपाकारः ॥ २१ ॥

कृत्वेति । दृढं यथा तथा गुदपीडनं कृत्वा आनाभेरामस्तकं श्यामतनुः कच्छपाकारश्च चिन्तितः ओङ्कारः च्युतिं बीजच्युतिं जयति ॥ २१ ॥

सितशरपुङ्खामूलं पारदरससहितमानने निहितम् ।
एककरञ्जकबीजान्तस्थं बीजं विधारयति ॥ २२ ॥

सितशरेति । सितशरपुङ्खामूलं पारदरससहितं सूतसहितम् एककरञ्जकबीजान्तस्थम् आनने निहितं वक्त्रे धृतं बीजं शुक्रं विधारयति, बहुकालपर्यन्तं बीजच्युतिं निवारयतीत्यर्थः ॥ २२ ॥

नरदक्षिणकररोमभिरिभकरकरभाश्वपुच्छसंजातैः ।
ग्रथितं दक्षिणकरगं रेतोरुत् कोलदशनास्थि ॥ २३ ॥

नरेति । नरस्य दक्षिणकररोमभिः इभस्य गजस्य करसञ्जातैः करभाश्वयोः पुच्छसञ्जातैः रोमभिश्च, अथवा इभखरेति पाठः । खरो गर्दभः, एतै रोमभिर्ग्रथितं कोलदशनास्थि कोलस्य वराहस्य दशनास्थि दक्षिणकरगं दक्षिणकरे बद्धं सत् रेतोरुत् बीजस्तम्भकं भवति ॥ २३ ॥

असितवृषदंशदक्षिणपार्श्वास्थितमस्थि कटितटे बद्धम् ।
सप्तच्छदबीजं वा बीजच्युतिविजयि वदनगतम् ॥ २४ ॥

असितेति । असितस्य कृष्णस्य वृषदंशस्य मार्जारस्य दक्षिणपार्श्वस्थितमस्थि पुरुषस्य कटितटे त्रिकस्थाने बद्धं सद् बीजच्युतिविजयि भवति । सप्तच्छदबीजं वा वदनगतं सद्बीजच्युतिविजयि भवति । सप्तच्छदः सप्तपर्णः ॥ २४ ॥

स्नुह्यजादुग्धपिष्टं लज्जालोमूलमाङ्घ्रिलेपनतः ।
ध्वजलेपादजमूत्रैः पिष्टं वा वारुणीमूलम् ॥ २५ ॥
कौसुम्भतैलमथवा वर्षाभूचूर्णमभ्यङ्गात् ।
चरणस्य च्युतिजयिनो योगा ह्येते न सन्देहः ॥ २६ ॥

स्नुहीति । स्नुहीदुग्धेन स्नुही स्वनामख्यातक्षीरसारवृक्षः, तद्गुणाश्च–उष्णापित्तदाहघ्नी, कुष्ठवातप्रमेहघ्नी च । तत्क्षीरं वातविषाध्मानगुल्मोदरघ्नं च । अजादुग्धेन पिष्टं लज्जालुमूलम् अङ्घ्रिलेपनतश्चरणलेपात् वीर्यच्युतिविजयि भवति, अजमूत्र पिष्टं वारुणीमूलम् इन्द्रवारुणीमूलं वा ध्वजलेपाद् बीजच्युतिविजयि भवति, कौसुम्भतैलं कुसुम्भबीजोद्भवतैलं, तच्च कटु सक्षारं वातघ्नं कफपित्तहरं च । ध्वजेऽभ्यङ्गाद् बीजच्युतिविजयि भवति, वर्षाभूः पुनर्नवा तच्चूर्णं तस्यां पक्वं तैलं वा ध्वजेऽभ्यङ्गाद् वीर्यच्युतिविजयि भवति, एते योगाश्चरणस्य लेपात् च्युतिजयितो वीर्यच्युतिजयिनो भवन्ति न सन्देहः सन्देहो नास्ति ॥ २५ ॥ २६ ॥

माहिषघृतसहदेवीतिलमधुसितकमलकेसरैस्तुल्यैः।
गृहचटकेन विलेपितनाभिः स्तब्धेन्द्रियो रमते ॥ २७॥

माहिषघृतेति। माहिषघृतं महिषीसम्बन्धि घृतं, सहदेवीमूलं दण्डोत्पलामूलं, तिलाः, मधु, सितकमलकेसराणि च एतैस्तुल्यैः गृहचटकेन कलविङ्केन च विलेपितनाभिः पुमान् एतैर्नाभिलेपं कृत्वा रममाणः स्तब्धेन्द्रियो रमते स्तब्धशुक्रो रमते ॥ २७॥

अथ लिङ्गवृद्ध्यधिकारः कथ्यते—

तिलतैलघोषटङ्कणमनःशिलाजातिपर्णरसकुष्ठैः।
वर्द्धयति लिङ्गमुच्चैः सप्तदिनं मर्दनं विहितम् ॥ २८॥

तिलतैलेति। तिलतैलं, घोषः घोषालता, टङ्कणकः टङ्कणक्षारं, मनःशिला स्वनामख्यातखनिजोपरसभेदः, तद्गुणाः—

मनःशिला गुरुर्वर्ण्या सरोष्णा लेखनी कटुः।
तिक्ता स्निग्धा विषश्वासकासभूतकफास्रनुत् ॥इति॥

जातिः मालती, पर्णः किंशुकवृक्षः, रसः प्रसिद्धः, कुष्ठः प्रसिद्धः एतैः तिलतैलादिभिः सप्तदिनं विहितं मर्दनं लिङ्गं ध्वजमुच्चैर्वर्द्धयति ॥२८॥

वज्रीदाडिमवल्कलबृहतीफलकुष्ठसहितभल्लातैः।
सिद्धं सर्षपतैलं षड्गुणकुम्भीरसे तद्वत् ॥ २९॥

वज्रीदाडिमेति। वज्री प्रभृतीनि द्रव्याणि कल्कद्रव्याणि षड्गुणकुम्भीरसे सितगिरिकर्णीरसे सिद्धं सर्षपतैलं तद्वत् सप्तदिनमर्दनाल्लिङ्गवृद्धिकरं भवतीत्यर्थः ॥ २९॥

अन्तर्धूमं दग्ध्वा सैन्धवजलशूककमलदलवज्रैः।
भल्लातकया लेपो बृहतीरसभावितैस्तद्वत् ॥ ३०॥

अन्तर्धूममिति। सैन्धवजलशूककमलदलवज्रैः अन्तर्धूमं दग्ध्वा भल्लातकया सह बृहतीफलरसभावितैर्लेपस्तद्वत् लिङ्गमुच्चैर्वर्द्धयति ३०

लिङ्गं व्रजति विवृद्धिं माहिषमलमिलितपूर्वमालिप्तम्।
माहिषनवनीतान्वितजलकणङ्कुष्ठगोमूत्रैः ॥ ३१॥

लिङ्गमिति । माहिषनवनीतान्वितजलकण्डूकुष्ठगोमूत्रैः महिषी मलमिलितं पूर्वं यथा तथा लिप्तं लिङ्गं वृद्धिं व्रजति । जलकण्डूर्जलशूकः ॥ ३१ ॥

भल्लातकास्थिसंभूतमाहिषमलसार्पिषा च कुम्भिकाश्मश्रु ।
हयगन्धासैन्धवमिति लेपो लिङ्गस्य वृद्धिकरः ॥ ३२ ॥

भल्लातकेति । भल्लातकास्थिसंभूतं, तद्गुणाः—कान्तितृप्तिकरं गुरु वृष्यम् अग्निदीप्तिकरं दाहकफघ्नं शोषकासकृमिपेत्तारुचिघ्नश्च । माहिषमलसार्पिषा च कुम्भिकाश्मश्रु हयगन्धसैन्धव इति पूर्वोक्तद्रव्यैर्लेपो लिङ्गस्य वृद्धिकरः ॥ ३२ ॥

मधुतगरगौरसर्षपबृहतीखरमञ्जरीकणाः सतिलाः ।
यवकुष्ठमरिचसैन्धवहयगन्धामाषसंयुक्ताः ॥ ३३ ॥
स्तनयुगलकर्णपालीध्वजभुजशिखरोपचयमेताः ।
ध्रुवमुन्मर्दनविधिना सतताभ्यासेन कुर्वन्ति ॥ ३४ ॥

मधुतगरेति । मधु क्षौद्रं, तगरं प्रसिद्धं, गौरसर्षपः प्रसिद्धः, बृहती कण्टकारिका, खरमञ्जरी अपामार्गः, कणा पिप्पली, तिलाश्च, यवकुष्ठमरिचसैन्धवहयगन्धामाषसंयुक्ताः एतैरुद्वर्त्तनविधिना सतताभ्यासेन स्तनयुगलकर्णपालीध्वजभुजशिखरोपचयं ध्रुवं कुर्वन्ति । हयगन्धा अश्वगन्धा ॥ ३३ ॥ ३४ ॥

भल्लातकबृहतीफलदाडिमफलकल्कसाधितं कुरुते ।
लिङ्गं मर्दनविधिना कटुतैलं वाजिलिङ्गाऽऽभम् ॥३५॥

भल्लातकेति । भल्लातकः स्वनामख्यातवृक्षः, बृहतीफलं बृहत्याः बीजम्, दाडिमफलं हिन्दीभाषायाम् अनार इति प्रसिद्धम् । एषु निकल्कीकृत्य साधितं कटुतैलं सर्षपतैलं मर्दनविधिना लिङ्गं वाजिलिङ्गाभम् अश्वलिङ्गसदृशं कुरुते ॥ ३५ ॥

पुटदग्धपद्मिनीदलभल्लातकबालकृष्णलवणानाम् ।
भूत्या परिणतबृहतीफलरसपरिपिष्टया भवति ॥३६॥

माहिषमलेन मिलितं लिङ्गं पश्चादनेकशो लिप्तम् ।
मुसलमिव मदनविह्वलयुवतीजनदर्पनिर्दलनम् ॥ ३७॥

पुटदग्धेति । पुटदग्धं पद्मिनीदलं, भल्लातकः स्वनामख्यातवृक्षः, तद्गुणाश्च–फलं रेतोजनकं कषायं मधुरं कोष्णं कफश्रमश्वासानाहविबन्धघ्नं शूलोदराध्मानकृमिघ्नं च । बालकृष्णलवणानां परिणते पक्के बृहतीफलरसे परिपिष्टया भूत्वा भस्मना तेजोवतीघृतेन अग्रे महिषीमलेन मिलितं पश्चात् अनेकशो बहुवारं लिप्तं लिङ्गं मुसलमिव मुसलाकारं भवति, मदनेन कामेन "मदनो मन्मथो मारः" इत्यमरः । विह्वलानां युवतीजनानां दर्पस्याहङ्कारस्य निर्दलनं नाशकरम् ॥ ३६ ॥ ३७ ॥

सिंहीफलभल्लातकनलिनीदलसिन्धुजन्मशैवालैः ।
माहिषनवनीतेन च करम्बितैः सप्तदिनमुषितैः ॥ ३८ ॥
मूलं हयगन्धाया माहिषमलमिलितपूर्वमालिप्तम् ।
भवति लघूकृतगर्दभलिङ्गं लिङ्गं ध्रुवं पुंसाम् ॥ ३९ ॥

सिंहीफलेति । सिंहीफलं बृहतीफलं, भल्लातकः, नलिनीदलं पद्मिनीदलं, सिन्धुजन्मशैवालं जलनीली, राजनिघण्टौ तु शैवालं बदरवृक्ष इति, तद्गुणाश्च–शीतलं स्निग्धं सन्तापव्रणघ्नम् । एतैः पूर्वोक्तैस्सर्वैः माहिषनवनीतेन च माहिषनवनीतं माहिषीदुग्धजातनवनीतं, तद्गुणाः–कषायं मधुरं शीतं वृष्यं बल्यं ग्राहि पित्तघ्नं पुष्टिदं च । राजनिघण्टौ तु महिषीनवनीतेन स्तनपीडास्थिरा भवेदिति । तेन करम्बितैः युक्तैः सप्तदिनम् उषितैः, हयगन्धायाः अश्वगन्धाया मूलं माहिषमलेन मिलितपूर्वम् आलिप्तं सत् पुंसां लिङ्गं ध्रुवं निश्चयेन लघूकृतगर्दभलिङ्गं गर्दभलिङ्गसदृशमिति यावद् । भवति॥३८॥३९॥

कनकरसमसृणवर्त्तितहयगन्धामूलमिश्रपर्युषितम् ।
माहिषमिह नवनीतं गतबीजे कनकफलमध्ये ॥ ४० ॥
गोमयगाढोद्वर्त्तितपूर्वं पश्चादनेन संलिप्तम् ।
भवति हयलिङ्गसदृशं लिङ्गं कठिनाङ्गनादयितम् ॥४१॥

कनकेति । कनकरसेन उन्मत्तरसेन मसृणवर्त्तितेन श्लक्ष्णपिष्टेन हयगन्धामूलेन मिश्रं गतबीजे अपनीतबीजे कनकफलमध्ये धत्तरफलमध्ये गतं पर्य्युषितं माहिषं नवनीतं गोमयेन माहिषगोमयेन पूर्वं गाढोद्वर्त्तितं पश्चात् अनेन गोमयेन संलिप्तं लिङ्गं हयलिङ्गसदृशं सत् काठिनाङ्गना हस्तिनी तस्याः दयितं प्रियं सन्तोषजनकमिति यावत् । भवति ॥ ४० ॥ ४१ ॥

अथ भगदोषदूरीकरणाधिकारः—

दलकुङ्कुमकुनटीभिर्गजदलतालीसतगरपादैर्वा ।
दलकरिकेसरमांसीरोहितशैलेयकुसुम्भतगरैर्वा ॥४२॥
लोहितपित्तकणघृतविमलाञ्जनसैन्धवैरथवा ।
भगलेपःसौभाग्यं जनयति भूयो न सन्देहः ॥४३॥

दलेति । दलं तेजपत्रं, कुङ्कुमं स्वनामख्यातगन्धद्रव्यं, तद्गुणाः–कटुकं तिक्तं स्निग्धं शिरोरोगव्रणक्रमिहरं वर्णकरं वमिहर त्रिदोषघ्नं व्यङ्गघ्नं च । कुनटी मनश्शिला एतैः पूर्वोक्तैः कुनट्यादिभिः, अथवा गजः नागकेशरवृक्षः, गजपिप्पली वा, दलं तेजपत्रं, तालिः तालभेदः, तगरचतुर्थांशसहितः, वा दलं तेजपत्रं, करिकेसरं नागकेसरम्, मांसी, मुरामांसी, वा चन्दनादितैलम्, जटामांसी वा, रोहितं कुसुम्भपुष्पं, कुङ्कुमं वा, शैलेयं शैलजनाम गन्धद्रव्यं, लघुनारायणतैलं वा, तद्गुणाः–

शैलेयं शीतलं हृद्यं कफपित्तहरं लघु ।
कण्डूकुष्ठाश्मरीदाहविषहृद्गुदरक्तहृत् ॥ इति ॥

कुसुम्भः कुङ्कुमवृक्षः, स्वनामप्रसिद्धवृक्षो वा, तद्गुणाः–

कुसुम्भो वातलो रूक्षो विदाही कटुकः स्मृतः ।
मूत्रकृच्छ्रं कफं रक्तं पित्तं चैव विनाशयेत् ॥ इति ॥

तगरैः, अथवा लोहितं रक्तचन्दनम्, राजनिघण्टौ कुङ्कुममिति । पित्तं, गोरोचना, कणा पिप्पली । तथाचोक्तं हारावल्याम्–

कणाजीरककुम्भीरमक्षिकापिप्पलीषु च ॥ इति ॥

घृतं, गुणाश्च—आयुर्वर्द्धकं देहदार्ढ्यकरं सौकुमार्यकान्तिबुद्धिस्मृतिबलकरं शीतघ्नं बाल्ययौवनवार्द्धक्येषु प्रधानबलकरं पथ्यञ्च । विमला

रूप्यमाक्षिकम्, अञ्जनं प्रसिद्धं, सैन्धवः प्रसिद्धः एतैः पूर्वोक्तैः सर्वैः भगलेपेन भूयः पुनरपि सौभाग्यं जनयति, नास्त्यत्र संदेहः॥४२॥४३॥

दाडिमपञ्चाङ्गैर्वा सिद्धं सिद्धार्थतैलमातनुते ।
मालतिकाकुसुमैर्वा गुह्याभ्यङ्गेन सौभाग्यम् ॥४४ ॥

दाडिमेति । दाडिमः एला, स्वनामख्यातफलवृक्षो वा, अनार इति हिन्दीभाषायां प्रसिद्धः । तस्य पञ्चाङ्गैः, तथाच पञ्चाङ्गलक्षणम्-

त्वक्पत्रकुसुमं मूलं फलमेकस्य शाखिनः ।
एकत्र मिलितं तच्चेत् पञ्चाङ्गमिति संज्ञितम् ॥ इति ॥

वा सिद्धं सिद्धार्थतैलं, सिद्धार्थः स्वनामख्यातः सर्षपः, तद्गुणाः- कटुतिक्तोष्णः वातरक्तघ्नः ग्रहदोषघ्नः त्वग्दोषहरः रूक्षः विषभूत-व्रणघ्नश्च । तस्य तैलम्, अथवा मालतिकाकुसुमैः, मालतिका मालती, तद्गुणाश्च—

मालती कफपित्तस्य रुग्व्रणक्रिमिकुष्ठजित् ।
चक्षुष्यं कुसुमं तस्याः पत्रं तत्कफपित्तजित् ॥ इति ॥

तस्याः कुसुमैः गुह्याभ्यङ्गेन सौभाग्यमातनुते करोति,भगदोषं हरतीत्यर्थः ॥ ४४ ॥

समभागैर्गदपद्मककर्पूरोशीरपुष्कराम्बुधरैः ॥
सितसर्षपजं तैलं समस्त भगदोषमपनयति ॥४५॥

समभागैरिति । गदं कुष्ठौषधिः, पद्मकं पद्मकाष्ठम्,तद्गुणाश्च-

पद्मकं तुवरं तिक्तं शीतलं वातलं लघु ।
विसर्पदाहाविस्फोटकुष्ठश्लेष्मास्रपित्तहृत् ॥ इति ॥

कर्पूरः प्रसिद्धः । उशीरः स्वनामख्यातसुगन्धतृणमूलम्, खस् इति हिन्दीभाषायां प्रसिद्धः । तद्गुणाः–शीतलं तिक्तं दाहहरं श्रमघ्नं पित्तज्वरघ्नं जलसौगन्ध्यकरं च । पुष्करं पुष्करमूलम्, अम्बुधरः नागरमुस्ता, भद्रमुस्ता वा, नागरमोथा इति हिन्दीभाषायाम् । एतैस्सर्वैः समभागैः सितसर्षपजं तैलं गुह्याभ्यङ्गेन समस्तं भगदोषमपनयति, दूरीकरोतीत्यर्थः ॥ ४५ ॥

निम्बकषायक्षालनममलाञ्जननिम्बसारधूपो वा ।
जीवच्छम्बूकाम्बुक्षालनमह्नां त्रिसप्तकं तद्वत् ॥४६॥

निम्बेति । निम्बकषायक्षालनम, अथवा अमलाञ्जननिम्बस्रक् निम्बमाला तद्धूपो वा त्रिसप्तकमह्नां, जीवच्छम्बूका जलशुक्तिः तदम्बुक्षालनं, तद्वद्भगदोषमपनयति ॥ ४६ ॥

अथ सङ्कोचविकाशविधिः—

पयसा सनालमब्जं पिष्ट्वा स्मरसदनमध्यनिक्षिप्तम् ।
हरिणीमिव करिणीमपि कुरुते स्मरसमरसुखहेतुम् ॥४७॥

पयसेति । सनालं सदण्डम् अब्जं कमलं पयसा जलेन पिष्ट्वा स्मरसदनमध्ये गुह्यमध्ये निक्षिप्तं करिणीं हस्तिनीमपि हरिणीमिव स्मरसमरसुखहेतुं कुरुते, भगं सङ्कोचयतीत्यर्थः ॥ ४७ ॥

चरटीगृहगण्डूपदवृषगोपानां तु चूर्णमेकैकम् ।
अजगव्यतक्रसेकात् संकोचयति स्मरागारम् ॥४८॥

चरटीति । चरटी, गृहगण्डूपदः गृहकिञ्चुलुकः, केचुआ इति हिन्दीभाषायां प्रसिद्धः । वृषगोपः वीरबहूटी इति हिन्दीभाषायां प्रसिद्धः । एतेषां तु एकैकं प्रत्येकं चूर्णम् अजस्य छागस्य गव्यतक्रं दुग्धभवघोलम् । तद्गुणाश्च—

गव्यं त्रिदोषशमनं पथ्यं श्रेष्ठं तदुच्यते ।
दीपनं रुचिकृन्मेध्यम् अर्शोदरविकारजित् ॥ इति ॥

तेन सेकात् स्मरागारं गुह्यं सङ्कोचयतीत्यर्थः ॥ ४८ ॥

असितभुजगमुखनिहिता मूत्रमृदसितेन वेष्टिता यस्याः ।
सूत्रेणास्ते तस्याः क्रमशः सङ्कोचयति योनिम् ॥
प्रकृतिं याति पुनःसा तत्त्वाख्यानेन वा तदुद्धरणात् ॥४९॥

असितेति । असितः कृष्णः यो भुजगः सर्पः तस्य मुखे निहिता यस्याः मूत्रमृदसितेन सूत्रेण वेष्टिता आस्ते, तस्याः क्रमशः क्रमेण योनिं सङ्कोचयति, पुनः तत्त्वाख्यानेन एवम्मया कृतमिति यथार्थनिवेदनेन वा तस्य सूत्रस्य उद्धरणात् प्रकृतिं याति प्राप्नोति, विशालतां गच्छतीति यावत् ॥ ४९ ॥

पिकनयनबीजलेपः कुरुते सङ्कोचमेकदिनम् ।
अधरोर्ध्वाग्रस्थितयोर्यथाक्रमं गोविषाणयोश्चूर्णैः ॥
सङ्कोचं च प्रकृतिं व्रजति भगो नाभिलेपेन ॥५०॥

पिकनयनेति । पिकः कोकिलः, 'कोकिलः पिक' इत्यमरः तस्य नयनबीजस्य लेपः एकदिनं सङ्कोचं कुरुते, यथाक्रमं क्रममनतिक्रम्य अधरोदूर्ध्वाग्रस्थितयोः गोविषाणयोः चूर्णैः नाभिलेपेन भगः सङ्कोचं याति, प्रकृतिं विशालतां च व्रजति गच्छति, अधःस्थिताग्रेण गोश्टङ्गेण सङ्कोचम्, ऊर्ध्वाग्रस्थितेन गोश्टङ्गेण स्वास्थ्यमित्यर्थः ॥ ५० ॥

अनयोरेव यथाक्रममालिप्ते मदनमन्दिरे चूर्णैः ।
पतनोत्थाने भवतः रतोद्यमान्तेऽपि लिङ्गस्य ॥ ५१ ॥

अनयोरिति । यथाक्रमम् अनयोः गोविषणयोरेव चूर्णैः मदनमन्दिरे भगे आलिप्ते सति रतोद्यमान्तेऽपि लिङ्गस्य पतनोत्थाने भवतः, सङ्कोचं विशालतां च व्रजत इति भावः । अधःस्थिताग्रगोश्टङ्गयोश्चूर्णेन लिप्ते स्मरमन्दिरे ध्वजस्य रतादावेव पतनम्भवति । ऊर्ध्वाग्रस्थितगोश्टङ्गयोश्चूर्णेन लिप्ते स्मरमन्दिरे रतान्तेऽपि ध्वजस्योत्थानम्भवतीत्यर्थः ॥ ५१ ॥

रजनीद्वयराजीवोद्भवकेसरदेवदारुभिर्लेपः ।
मन्मथसद्मनि विहितः करोति सङ्कोचसौभाग्ये ॥ ५२ ॥

रजनीद्वयेति । रजनीद्वयं हरिद्राद्वयं, हरिद्रा दारुहरिद्रा च । राजीवोद्भवकेसराणि पद्मकिञ्जल्काः, देवदारु प्रसिद्धम् एतैः पूर्वोक्तैस्सर्वैः मन्मथसद्मनि भगे निहितः लेपः सङ्कोचं, सौभाग्यं च करोति ॥ ५२ ॥

घृतमधुसैन्धवलेपादपि हरिणीनां च तरुणीनाम् ।
बालानामबलानां विशालतां व्रजति रतिनिलयः ॥५३॥

घृतेति । घृतं प्रसिद्धम्, मधु, सहत इति हिन्दीभाषायां प्रसिद्धः । सैन्धवः खनिजलवणम्, सेन्धानून इति हिन्दीभाषायां

प्रसिद्धः। एतेषां लेपात् हरिणीनामपि तरुणीनाम्, अबलानामपि बालानां रतिनिलयः भगः विशालतां व्रजति, गच्छतीति यावत् ॥५३॥

अथ लोमशातनाधिकारं कथयति—

हरितालतालबीजे सिन्धुरघननादकन्दलीक्षारः ।
इक्ष्वाकुबीजकुनटीवचास्नुहीमूलमञ्जिष्ठाः ॥५४॥
वरुणगिरिकर्णिके च स्नुह्याः क्षीरेण सप्तधा सिक्ते ।
सिक्त्वेक्ष्वाकुरसैरथ सम्पिष्ट्वा कल्पयेत् कल्कम् ॥५५॥
तत्कल्कार्द्रं तैलं कन्दलिका बहुलवारिणा पक्त्वा ।
रोमोत्पाटनपूर्वं कुरु लेपं तेन तैलेन ॥ ५६ ॥

हरितालेति । हरितालं प्रसिद्धं, तालबीजं प्रसिद्धं, सिन्धुरः निर्गुण्डीवृक्षः, मेउडी इति हिन्दीभाषायां प्रसिद्धः। घननादः तण्डुलीयकं, कन्दली पद्मबीजम्, क्षारः लवणरसभस्मविशेषः, इक्ष्वाकुः तिक्ततुम्बी, तितलौआ इति हिन्दीभाषायां प्रसिद्धः। तस्य बीजं, कुनटी मनःशिला, मनसिल इति हिन्दीभाषायां प्रसिद्धः । वचा स्वनामख्यातपण्यद्रव्यं, बच इति हिन्दीभाषायां प्रसिद्धः । तद्गुणाश्च-तीक्ष्णा कटुः उष्णा कफाऽऽमग्रन्थिशोफघ्नी वातज्वरातिसारघ्नी वान्तिकृत् उन्मादभूतघ्नी च । स्नुही स्वनामख्यातक्षीरसारवृक्षः, तद्गुणाश्च—उष्णा पित्तदाहघ्नी कुष्ठवातप्रमेहघ्नी च । तस्याः मूलं, मञ्जिष्ठा स्वनामख्यातलता, मजीठ इति हिन्दीभाषायां प्रसिद्धा। तद्गुणाश्च-मधुरा कषाया उष्णा गुरुः व्रणमेहज्वरश्लेष्मविषनेत्ररोगघ्नी च । वरुणः स्वनामख्याततिक्तशाकवृक्षः, तद्गुणाश्च—कटुः उष्णः रक्तदोषघ्नः शिरोवातहरः स्निग्धः आग्नेयः विद्रधिवातघ्नश्च। गिरिकर्णिका अपराजिता एते स्नुह्याः क्षीरेण सप्तधा सिक्ते सति, इक्ष्वाकुः तिक्त तुम्बी तस्य रसैः सिक्त्वा अथानन्तरम्;सम्पिष्ट्वा कल्कं पिण्डं, तथाचोक्तम्—

यत् पिण्डं रसपिष्टानां तत्कल्कं परिकीर्त्तितम् ॥ इति ॥

कल्पयेत्, तत्कल्कार्द्रं तैलं, कन्दलिका पद्मबीजं बहुलवारिणा श्वेत-

मरिचजलेन पक्त्वा तेन तैलेन रोमोत्पाटनं लोमनाशनं पूर्वं यस्य एतादृशं लेपं कुरु, पूर्वोक्तलेपेन लोमानि प्रणश्यन्तीति भावः ॥ ५४ ॥ ५५ ॥ ५६ ॥

यदि मस्तकमपि नेतुं तव कौतुकमस्ति हस्ततालतुलाम्।
द्वित्राणामपि चैषामेष विधिः सहरितालानाम् ॥५७॥

यदीति। यदि तव मस्तकमपि हस्ततालतुलां हस्तस्य करस्य तालः प्रसिद्धः तस्य तुलां साम्यं नेतुं कौतुकमस्ति सहरितालानां हरितालेन सहितानां द्वित्राणामपि एषां पूर्वोक्तकथितानाम् एष विधिः प्रोक्तः, हरितालसहितपूर्वोक्तश्लोकस्थकरणेन मस्तकलोमान्यपि प्रणश्यन्तीति भावः ॥ ५७ ॥

शातयति शङ्खचूर्णं लोमानिपलाशभस्म हरितालम्।
कौसुम्भतैलमप्युत्पाटनपूर्वं विलेपनात्तद्वत् ॥५८॥

शातयतीति। शङ्खचूर्णं शङ्खभस्मकृतचूर्णं, तद्गुणाश्च-कटुक्षारम् उष्णं परं कृमिघ्नश्च। पलाशस्य किंशुकस्य भस्म, हरितालं लोमानि रोमाणि शातयति, विनाशयतीत्यर्थः। कौसुम्भतैलमपि कुसुम्भबीजोद्भवतैलमपि, तच्च कटु सक्षारं वातघ्नं कफपित्तहरं च भवति। विलेपनात् लेपनात् उत्पाटनपूर्वं यथा स्यात्तथा लोमानि शातयति, विनाशयतीत्यर्थः ॥ ५८ ॥

षड्भागाद्धरितालादेको भागश्च किंशुकक्षारात्।
तद्वच्च शङ्खचूर्णादिति शातनमुत्तमं लोम्नाम् ॥५९॥

षड्भागादिति। हरितालस्य षड्भागात् किंशुकक्षारात् पलाशक्षारात् एको भागः तद्वत् पूर्वोक्तवत् शङ्खचूर्णात् इति लोम्नाम् उत्तमं शातनं कथितम्, एतेन लोमानि विनश्यन्तीति भावः ॥५९॥

अथ गर्भचालनविधिं कथयति—

अमलामलाञ्जनयुता पीता शीताम्बुना हरति।
गर्भमृतौ भगनिहितं घृतमधुयुक्तं पलाशबीजं वा ॥६०॥

अमलेति । अमला महानीली, अमरकोषे आमलकीत्युच्यते । मला भूम्यामलकी, शब्दचन्द्रिकायां तु आमहारिद्रेत्युच्यते । मूलं-ति पाठे मूला गृहगोधिका, त्रिकाण्डे तु शतावरीत्युच्ये । अञ्जनः गृहगोधिका, एतैर्युता ऋतौ शीताम्बुना शीतजलेन पीता सती गर्भं हरति, विनाशयतीत्यर्थः । अथवा घृतमधुयुक्तं पलाशबीजम् ऋतुकाले भगे निहितं सत् गर्भं हरतीत्यर्थः । ऋताविन्युभयत्रापि सम्बध्यते ॥ ६० ॥

तण्डुलजलेन पीतं मूलं ज्वलनस्य वा जयन्त्या वा ।
गर्भघ्नं भगनिहितं लवणं कटुतैलयुक्तं वा ॥ ६१ ॥

तण्डुलेति । ज्वलनस्य चित्रकवृक्षस्य मूलम्, अथवा जयन्त्याः स्वनामख्याततिक्तशाकौषधिक्षुपस्य, भावप्रकाशे तु श्वेतनिर्गुण्डी-त्युच्यते, अग्निमन्थस्य वा, तद्गुणाश्च-गलगण्डाऽनिलभूतघ्नी तिक्ता कटुः उष्णा च । तथाचोक्तं चरकसंहितायाम्—

मूलं जयन्त्याः शिरसि धृतं सर्वज्वरापहमिति ॥

मूलं तण्डुलजलेन पीतं सत् गर्भघ्नं गर्भनाशकं भवति, अथवा कटुतै-लयुक्तं लवणं भगे निहितं सत् गर्भघ्नं भवतीत्यर्थः ॥ ६१ ॥

शैवलकेसरबीजं मूलं वा चम्पकस्य वा कणया ।
गर्भं रुणद्धि पीतं कटुतैलं वा जरत्सुधया ॥६२॥

शैवलेति । शैवलकेसरयुक्तं मूलम् अनलचक्रकस्य कणया वा युक्तम् अनलचक्रमूलं गर्भं रुणद्धि । जरत्सुधया पीतं कटुतैलं वा गर्भं निहन्ति ॥ ६२ ॥

अथ गर्भधारणोपायं ब्रूते—

ऋतुदिवसे घृतसहितं पीत्वा नवनागकेसरस्य रजः ।
दुग्धमनुपीय रमणी रमणगता गर्भिणी भवति ॥६३॥

ऋत्विति । रमणी रामा ऋतुदिवसे नवनागकेसरस्य स्वनाम-ख्यातपुष्पवृक्षस्य रजः धूलिं घृतसहितं पीत्वा तदनु तत्पश्चाद् दुग्धं

पीत्वा रमणगता पतिपार्श्वे गता सती गर्भिणी भवति,गर्भं धारयतीत्यर्थः ॥ ६३ ॥

मूलमपि लक्ष्मणायाःप्राज्येनाऽऽज्येन नासिकापीतम् ।
तण्डुलजलेन पीता ददाति पुत्रं जटामांसी ॥ ६४ ॥

मूलमिति । लक्ष्मणा श्वेतकण्टकारी, मेदिनीकोषे तु स्वनामख्यातं कन्दमित्युच्यते, तल्लक्षणम्—

पुत्रकारकरक्ताल्पबिन्दुभिर्लाञ्छिता सदा ।
लक्ष्मणा पुत्रजननी बस्तगन्धाकृतिर्भवेत् ॥ इति ॥

तद्गुणाश्च —मधुरा शीतला वन्ध्यादोषघ्नी रसायनी बल्या त्रिदोषघ्नी च । तस्याः मूलं प्राज्येन प्रभूतेन आज्येन घृतेन नासिकया पीतं सत् पुत्रं ददाति । अथवा जटामांसी, हिन्दीभाषायां तु जटामसी इति प्रसिद्धा । तण्डुलजलेन पीता सती पुत्रं ददातीत्यर्थः ॥६४॥

गोरेकवर्णभाजः पयसा वन्ध्यापि धारयेद्गर्भम् ।
पीत्वा केकिशिखायाः पुत्रञ्जीवस्य वा मूलम् ॥६५॥

गोरिति । एकवर्णभाजः एकवर्णाया गोः धेनोः पयसा दुग्धेन केकिशिखायाः मयूरशिखायाः मूलं पीत्वा वन्ध्यापि गर्भं धारयेत्, अथवा पुत्रञ्जीवस्य जीवकजुपस्य पितौञ्झिया इति प्रसिद्धस्य मूलम् एकवर्णायाःधेनोः दुग्धेन सह पीतं सद् गर्भं धारयेदित्यर्थः ॥६५॥

पीत्वाऽमुनैव पयसा रजसि स्नाता च लक्ष्मणामूलम् ।
सप्तक्षालितशालीभक्तं भुक्त्वा सुतं लभते ॥ ६६ ॥

पीत्वेति । रजसि स्नाता, ऋतुस्नातेत्यर्थः ।अबला लक्ष्मणायाः श्वेतकण्टकार्याःमूलम् अमुनैव पयसा दुग्धेन पीत्वा सुतं लभते,अथवा सप्तक्षालितं सप्ताम्बुना क्षालितं यत् शालीभक्तम् ओदनं भुक्त्वा अङ्गना अवश्यमेव सुतं लभत इत्यर्थः ॥ ६६ ॥

अथ गर्भस्रावनिवारणोपायः—

पीतं मधुसैन्धवयुतमुत्पलराजीवमूलशालूकम् ।
दलमपि गोधावल्याःसाऽऽज्यं रक्तस्रुतिं हरति ॥६७॥

पीतामिति । मधुसैन्धवयुतम् उत्पलं नीलकमलं, राजीवं पद्मं तन्मूलं शालूकं पद्मकन्दम् एतत् सर्वं पीतं, गोधावल्याः हंसपदीलतायाः दलमपि साऽऽज्यं घृतसहितं पीतं रक्तस्रुतिं रक्तप्रवाहं हरति, विनाशयतीत्यर्थः ॥ ६७ ॥

उत्पलमुपलामधुकं श्यामलता लोध्रचन्दनोपेतम् ।
तण्डुलजलेन पीतं गर्भस्रावं निवारयति ॥ ६८ ॥

उत्पलमिति । उत्पलं नीलकमलम्, उपला शर्करा, मधुकं यष्टिमधु, हेमचन्द्रकोषे तु मधूकवृक्षेत्युच्यते, श्यामलता श्यामा नाम का चिल्लता, लोध्रः लोध्र इति हिन्दीभाषायां प्रसिद्धः, एतत्सर्वं चन्दनोपेतं तण्डुलजलेन पीतं गर्भस्रावं निवारयति, दूरीकरोतीत्यर्थः ॥६८॥

मधुककुशकाशसर्पिःसितोत्पलैः सहितमथ दुग्धम् ।
मुस्तान्वितमपि पेयं गर्भस्रावे च शूले च ॥ ६९ ॥

मधुकेति । मधुकं यष्टिमधु, कुशः, काशः, सर्पिः घृतम् एतत्सर्वं सितोत्पलैः श्वेतकमलैः सहितम् अथ मुस्तान्वितमपि भद्रमुस्तायुक्तं दुग्धं गर्भस्रावे शूले च पेयमिति भावः ॥ ६९ ॥

अथ सुखप्रसूत्युपायः कथ्यते—

खर्वश्रीपुच्छजटां पुष्यार्कोत्पाटितां कटौ बद्ध्वा ॥
पीत्वा च लग्नगर्भा विमुच्यते गर्भिणी झटिति ॥७०॥

खर्वेति । खर्वश्रीः तिलकः, पुच्छजटां पारावतपुच्छजटां पुष्यनक्षत्रोत्पाटितां कटे त्रिके बध्वा अथवा खर्वश्रियं नागवलां पीत्वा च लग्नगर्भा गर्भिणी झटिति मुच्यते । अथ वा खर्वं कुब्जकपुष्पवृक्षं, श्रियं बिल्ववृक्षं, लवङ्गलतां वा, पुच्छं पिच्छं, जटां भूम्यामलकीं, जटामासीं वा पुष्यार्के पुष्यनक्षत्रयुक्तरविवासरे उत्पाटितां कटौ कटिदेशे बद्ध्वा पीत्वा वा लग्नगर्भा युक्तगर्भा गर्भिणी नारी झटिति शीघ्रं विमुच्यते शीघ्रं गर्भस्रावो भवतीत्यर्थः ॥७०॥

कृत्वा च सप्तखण्डं गुञ्जामूलं निबध्य कटिदेशे ।
सूत्रैःसप्तभिरचिरात् सुखप्रसूतिर्मूढगर्भापि ॥७१॥

कृत्वेति । गुञ्जा स्वनामख्यातोपविषजातीयमूलविषलता, तथा चोक्तं राजनिघण्टौ—

गुञ्जाद्वयं तु केश्यं स्याद्वातपित्तज्वरापहम् ।
मुखशोषभ्रमश्वासतृष्णामदविनाशनम् ॥
नेत्रामयहरं वृष्यं बल्यं कण्डूव्रणं हरेत् ।
कृमीन्द्रलुप्तकुष्ठानि रक्ता च धवलापि च ॥ इति ॥

तस्याः मूलं सप्तखण्डं च कृत्वा सप्तभिः सूत्रैः कटिदेशे निबध्य बद्ध्वा मूढगर्भापि कठिनगर्भापि नारी, तल्लक्षणं तमेव कदाचिद्विवृद्धम्, असम्यगागतम्, अपत्यपथमनुप्राप्तम्, अनिवस्यमानम्, अपानवैगुण्यसम्मोहितं गर्भं मूढगर्भमित्याचक्षते । अचिरात् शीघ्रं सुखप्रसूतिर्भवतीत्यर्थः ॥ ७१ ॥

सितपिकलोचनचरणं चर्वणपूर्वं च कर्णपूरणतः ।
अतिगर्भपीडिताङ्गी वनितासुखप्रसूतिमातनुते ॥७२॥

सितेति । सितः श्वेतः, पिकः कोकिलः, तस्य लोचनं, चरणं च चर्वणं पूर्वं यस्य एतादृशं यथा स्यात्तथा कर्णपूरणतः अतिगर्भेण पीडिताङ्गी निर्पीडितदेहा वनिता सुखप्रसूतिम् आतनुते करोति, सुखेन गर्भस्रावं करोतीत्यर्थः ॥ ७२ ॥

मूलं कृष्णवलायाः सितगिरिकर्णीजटायुतं लिप्त्वा ।
क्षिप्तं योनौ जनयति सुखप्रसूतिंमूढगर्भायाः ॥७३॥

मूलमिति । कृष्णवलायाः मूलं सितगिरिकर्णी पाण्डुराऽपराजिता तस्याः जटायुतं लिप्त्वा मूढगर्भायाः योनौ क्षिप्तं सत् सुखप्रसूतिं जनयतीत्यर्थः ॥ ७३ ॥

कटिबद्धमरुणसूत्रैः श्वेतबलामूलमत्र मलपातम् ।
कुरुते ह्यापादालिप्तं क्षिप्रमेवैक्ष्वाकवं मूलम् ॥७४॥

बद्धमिति । श्वेतबलायाः मूलम् अरुणसूत्रैः रक्तसूत्रैः कटिबद्धं सत् मलस्य पातं कुरुते, अथवा ऐक्ष्वाकवम् इक्ष्वाकुः तिक्ततुम्बी तत्संबन्धि मूलम् आपादलिप्तं पादमाभिव्याप्य लिप्तं सत् क्षिप्रमेव मलपातं कुरुत इत्यर्थः । कटिबद्धोऽरुणसूत्रैः श्वेतबलाङ्घ्रिर्निपातयत्यमरामिति वा पाठः । अमरां जरायुं निपातयति ॥ ७४ ॥

अथ योनिशूलापनयनोपाय उच्यते–

पिष्ट्वा क्षिप्तं योनौ मूलं खरमञ्जरीपुनर्नवयोः ।
नवसूतायाः सकलं योनिगतं शूलमपनयति ॥७५॥

पिष्ट्वेति । खरमञ्जरी अपामार्गक्षुपः, वैद्यकनिघण्टौ तु श्वेताऽपामार्ग इत्युच्यते । पुनर्नवा स्वनामख्यातपत्रशाकभेदः, अनयोर्मूलं पिष्ट्वा योनौ क्षिप्तं सत् नवसूतायाः अभिनवप्रसूतायाः योनिगतं सकलं शूलम् अपनयति, दूरीकरोतीत्यर्थः ॥ ७५ ॥

कार्पासबीजसाधितघृतमुन्दुरुमांससिद्धतैलं वा ।
भगभरणेन तदीयं सूतायाःशूलमपनयति ॥७६॥

कार्पासेति । कार्पासः कपास इति हिन्दीभाषायां प्रसिद्धः । तस्य बीजे साधितं घृतम्, अथवा उन्दुरोः मूषकस्य मांसे सिद्धं तैलं प्रसूतायाः भगभरणेन तदीयं शूलम् अपनयति, दूरीकरोतीत्यर्थः ॥ ७६ ॥

गोमयरसगोमूत्रैः पेषणपूर्वं घृतेन सह लेपात् ।
हन्ति कृमीन् कामौकसि पत्रं वरुणस्य सूतायाः ॥७७॥

गोमयेति । वरुणस्य स्वनामख्याततिक्तशाकवृक्षस्य, तद्गुणाः–कटुः उष्णः रक्तदोषघ्नः शिरोवातहरः स्निग्धः आग्नेयः विद्रधिवातघ्नश्च । पत्रं गोमयरसगोमूत्रैः पेषणपूर्वं यथा स्यात्तथा घृतेन सह लेपनात् सूतायाः कामौकसि, गुह्यस्थानेत्यर्थः । कृमीन् हन्ति, विनाशयतीत्यर्थः ॥ ७७ ॥

अथ योनिगन्धदूरीकरणोपायं ब्रूते—

कुष्ठकमलबालोत्पलसाधिततैलेन पूरणं योनेः।
अभयागुडधूपनमथ निम्बक्वाथेन धौतायाम् ॥७८॥

कुष्ठेति। कुष्ठं प्रसिद्धं, कमलं, बालोत्पलम् एषु साधितं यत्तैलं तेन योनेः पूरणम्, अथवा निम्बस्यस्य क्वाथेन धौतायां योन्याम् अभयागुडधूपनम् अभया हरीतकी, चिकित्सास्थाने तु आमलकीत्युच्यते। गुडः प्रसिद्धः, ताभ्यां धूपनम्, एतद्धूपेन योनिः सुगन्धयुक्ता भवतीत्यर्थः ॥ ७८ ॥

पिष्ट्वा जातीकुसुमं ज्येष्ठीमधुपञ्चपल्लवानथवा।
तैलेन योनिपूरणमातपतप्तेन गन्धघ्नम् ॥७९॥

पिष्ट्वेति। जाती, चमेली इति हिन्दीभाषायां प्रसिद्धा। तस्याः कुसुमं, ज्येष्ठीमधु, यष्टिमधु, हिन्दीभाषायां जेठीमध इति प्रसिद्धम्। पञ्चपल्लवान् आम्रजम्बूकपित्थबीजपूरबिल्वानां पल्लवान्, तथाचोक्तम्-

आम्रजम्बूकपित्थानां बीजपूरकबिल्वयोः।
गन्धकर्माणि सर्वत्र पत्राणि पञ्चपल्लवम् ॥ इति ॥

पिष्ट्वा आतपतप्तेन तैलेन योनिपूरणमन्तर्गन्धघ्नं मतामित्यर्थः ॥ ७९ ॥

अथ प्रसूताया योनिसङ्कोचोपायः कथ्यते—

सुरगोपकीटचूर्णं मिलितं मूलेन कारवेल्लस्य।
स्मरमन्दिरमभ्यङ्गात् संकोचयति प्रसूतायाः ॥८०॥

सुरगोपेति। सुरगोपकीटस्य इन्द्रगोपकीटस्य चूर्णं, कारवेल्लस्य स्वनामख्यातफलशाकलतायाः,हिन्दीभाषायां करैली इति प्रसिद्धायाः। तथाचोक्तम्—

कारवेल्लश्चातितिक्तमग्निदीप्तिकरं लघु।
उष्णं शीतं भेदकं च स्वादु पथ्यं समीरितम् ॥
अरुचिञ्च कफं वातं रक्तदोषं ज्वरं कृमीन्।
पित्तं पाण्डुं च कुष्ठं च नाशयेत् ॥ इति ॥

मूलेन मिलितम् अभ्यङ्गात् प्रसूतायाः स्मरमन्दिरं गुह्यं संकोचय-
यति ॥ ८० ॥

दुग्धेन पिष्टपीताः स्तन्यं तन्वन्ति कलमतण्डुलकाः ।
पुष्कररुहपुष्करमिव सप्ताहाऽभ्यासयोगेन ॥८१॥

दुग्धेनेति । कलमः धान्यविशेषः तस्य तण्डुलकाः दुग्धेन आदौ पिष्टाः पश्चात् पीताः सप्ताहाऽभ्यासयोगेन पुष्कररुहपुष्करमिव जलजं पुष्करं पद्ममिव स्तन्यं तन्वन्ति, विस्तारयन्तीत्यर्थः । पुष्करं पुष्करमूलम् ॥ ८१ ॥

जयति जयस्तनकोपं विशालमपि लेपनाद्विशालायाः ।
आस्कन्दति कन्दोपि च कुमारिकायाः समं निशया ॥८२॥

जयतीति । विशालायाः इन्द्रवारुणीलतायाः विशल्यायाः इति वा पाठः । लेपनात् विशालमपि स्तनकोपं स्तनवर्द्धनं संकोचं जयति, सर्वोत्कर्षेण वर्त्तनइत्यर्थः । निशया हरिद्रया समं सह कुमारिकायाः कन्यायाः कन्दोपि च योनिरोगविशेषोपि आस्कन्दति, निवारयतीत्यर्थः ॥ ८२ ॥

सूतायाः कृशमुदरं पीतं तक्रेण मालतीमूलम् ।
घृतमधु लीढा चोषसि करोति धात्री समं निशया ॥८३॥

सूतायाइति । मालत्याः मूलं तक्रेण पीतं सत् सूतायाः उदरं कृशं क्षीणं करोति, उषसि प्रातः काले निशया हरिद्रया, अथवा संग्रहणीतालीशादिचूर्णेन समं घृतमधुभ्यां लीढा धात्री आमलकी वा सूतायाः उदरं कृशं करोतीत्यर्थः ॥ ८३ ॥

सहकारदाडिमत्वक् मिलितः शङ्खचूर्णलेप इव ।
चिञ्चाकरञ्जबीजे लेपोपि क्षिपति दौर्गन्ध्यम् ॥८४॥

सहकारेति । सहकारः आम्रः, दाडिमः अनार इति हिन्दीभाषायां प्रसिद्धः । अनयोः त्वकमिलितः शङ्खचूर्णस्य लेप इव चिञ्चा

तिन्तिडी, करञ्जः, हिन्दीभाषायां करौंदा इति प्रसिद्धः । अनयोर्बीजैः लेपोपि दौर्गन्ध्यं क्षिपतीत्यर्थः ॥ ८४ ॥

अथ गात्रगन्धदूरीकरणोपायं ब्रवीति-

ककुभकुसुमजम्बूदललोध्रैरुद्वर्तनं च समभागैः ।
हरति निदाघे विहितं घर्मादिजदेहदौर्गन्ध्यम् ॥८५॥

ककुभेति । ककुभस्य कुसुमानि च जम्बूदलानि च लोध्रं च तैः समभागैरुद्वर्तनं निदाघे विहितं घर्मादिजनितदेहदौर्गन्ध्यं हरति ॥८५॥

रोध्रोशीरशिरीषकपद्मकचूर्णेन मिलितदेहस्य ।
ग्रीष्मेपि त्वग्दोषाः स्वेदप्रभवा न जायन्ते ॥८६॥

रोध्रोशीरेति । रोध्रं लोध्रकाष्ठम्, उशीरः, खस इति हिन्दीभाषायां प्रसिद्धः । शिरीषकः स्वनामख्यातवृक्षः, तद्गुणाः–

शिरीषो मधुरोऽनुष्णस्तिक्तश्च तुबरो लघुः ।
दोषशोथविसर्पघ्नः कासव्रणविषापहः ॥ इति ॥

पद्मकम् एतेषां चूर्णेन मिलितदेहस्य नरस्य ग्रीष्मकालेपिस्वेदप्रभवाः त्वचो दोषाः दौर्गन्ध्यादयो न जायन्ते इत्यर्थः ॥ ८६ ॥

मलयजकाश्मीरजलघुलोध्रतगरवालकैश्च समभागैः ।
सकृदपि कृतमुद्वर्तनमतनुं तनुगन्धमपनयति ॥८७॥

मलयजेति । मलयजः चन्दनं, काश्मीरजं कुङ्कुमं, पुष्करमूलं वा, लोध्रः,तगरं,वालकं ह्रीवेरः,श्वेतमरिचो वा एतैस्सर्वैस्समभागैस्तुल्यभागैः सकृदपि कृतम् उद्वर्त्तनम् अतनुं तनुगन्धं विशालदौर्गन्ध्यम् अपनयति दूरीकरोति, विनाशयतीत्यर्थः ॥ ८७ ॥

बिल्वशिवासमभागैर्लेपाद्भुजमूलगन्धमपनयति ।
परिणततिन्तिडिकान्वितपूतिकरञ्जोत्थबीजं वा ॥८८॥

बिल्वेति । बिल्वः हिन्दीभाषायां बेल इति प्रसिद्धः । शिवा हरीतकी, आमलकी वा, अनयोः समभागैः लेपात् भुजमूलगन्धं

कक्षागन्धम् अपनयति, विनाशयतीत्यर्थः । अथवा परिणततिन्तिडिकान्वितं परिपक्वचिञ्चायुक्तं चिञ्चा हिन्दीभाषायाम् इमिली इति प्रसिद्धा । पक्वतद्गुणाः-सरा रुच्या वह्निकृत् वस्तिशोधनी च । पूतिकरञ्जः करञ्जवृक्षविशेषः, तदुत्थबीजं, तद्बीजगुणः-बल्यं तस्य लेपात् कक्षागन्धं विनाशयतीत्यर्थः ॥ ८८ ॥

अथ मुखगन्धदूरीकरणोपायं ब्रूते—

आस्वादिता च सकृदपि मुखगन्धं सकलमपनयति ।
त्वग्बीजपूरकफलजा पवनमवाच्यं च नाशयति ॥८९॥

आस्वादितेति । बीजपूरकफलजा मातुलुङ्गफलजा त्वक् सकृदपि आस्वादिता च सकलं मुखगन्धम् अपनयति विनाशयति, अवाच्यं पवनं च, अधोवायुमित्यर्थः । नाशयतीत्यर्थः ॥ ८९ ॥

कुष्ठैलवालुकैलायष्टीमधुमुस्तधान्यकृतकवलः ।
हरति मुखगन्धमखिलं क्षिपति रसोनादिकं गन्धम् ॥९०॥

कुष्ठेति । कुष्ठं प्रसिद्धम्, एलबालुकं स्वनामप्रसिद्धगन्धद्रव्यविशेषः, तद्गुणाः—कटु पाकं कषायं लघु शीतलं कण्डूकुष्ठकृमिघ्नं तृष्णाछर्दिकफपित्तरक्तमूत्रहरम् । एला स्वनामख्यातपण्यद्रव्यं, हिन्दीभाषायाम इलायची इति प्रसिद्धा । तद्गुणाः शीतलातिक्तोष्णसुगन्धिपित्तघ्नं कफघ्नं हृद्रोगरं मलार्तिवान्तिपुंस्त्वघ्नं च । यष्टीमधु स्वनामख्यातमधुरकाष्ठं, हिन्दीभाषायां जेठीमध इति प्रसिद्धम् । मुस्तः मुस्तकः, धान्यम् एतैस्सर्वैः कृतकवलस्सन् अखिलं मुखस्य गन्धं हरति, रसोनादिकगन्धं लशुनादिगन्धं च क्षिपतीत्यर्थः ॥९०॥

जातिफलजातिपत्रीफणिज्जवाह्लीककुष्ठसंचरिता ।
अपहरति पूतिगन्धं मुखविवरपरिस्थिता गुटिका ॥९१॥

जातिफलेति । जातीफलं स्वनामख्यातसुगन्धफलं, तद्गुणाः-तिक्तं कटु कफघ्नं लघु तृष्णाघ्नं मुखक्लेददौर्गन्ध्यघ्नं च । जातिपत्री जातीफलत्वक्, हिन्दीभाषायां जावित्री इति प्रसिद्धा तद्गुणाः-कटुः तिक्तः सुरभिः कफजाड्यहरी मुखवैशद्यजननी च । फणिज्जः क्षुद्रपत्र-

तुलसीभेदः, गन्धतुलसी वा, वाह्लीकं कुङ्कुमं, हिङ्गु वा, कुष्ठं प्रसिद्धम् एतैस्सर्वैस्संचरिता युक्ता गुटिका मुखविवरे मुखच्छिद्रे परिस्थिता सती पूतिगन्धं, दुर्गन्धमित्यर्थः । अपहरति, विनाशयतीति भावः॥६१॥

विघटयति पूतिगन्धं मुखगन्धं खाद्यमानमनुदिवसम् ।
कटुतिक्तकषायरसं तैलयुतं दन्तधावनं पुंसाम् ॥६२॥

विघटयतीति।कटुतिक्तकषायरसं तैलयुक्तंदन्तधावनम् अनुदिवसं प्रतिदिनं खाद्यमानं पुंसां पूतिगन्धं दुर्गन्धं मुखगन्धं च विघटयति, नाशयतीत्यर्थः ॥ ६२ ॥

अथ स्वरमाधुर्यकरणोपायं कथयति

जातिफलैलापिप्पलिलाजकमधुमातुलुङ्गदललेहः ।
सतताभ्यासात्कुरुते किन्नरमधुरस्वरं पुरुषम् ॥६३॥

जातिफलेति । जातिफलं प्रसिद्धम्,एला,पिप्पयलः, हिन्दीभाषायां पीपर इति प्रसिद्धा । लाजकम् उशीरः, मधु, मातुलुङ्गदलं हिन्दीभाषायां बिजौरा इति प्रसिद्धम् । एतेषां लेहः सतताभ्यासात् पुरुषं किन्नरवत् मधुरस्वरं कुरुत इत्यर्थः ॥ ६३ ॥

अथ स्त्रीणामङ्गरागं कथयति—

तिलसर्षपरजनीद्वयकुष्ठकृतोद्वर्त्तनानि भजमानाः ।
कान्तिं हसन्ति हेम्नो बिभ्रति सौरभ्यमधिकं च ॥६४॥

तिलेति । तिलाः, सर्षपः, रजनीद्वयं,हारिद्राद्वयं, कुष्ठं प्रसिद्धम् एतैः कृतानि उद्वर्त्तनानि भजमाना नराः हेम्नः कान्तिं हसन्ति कान्तिजितहेमच्छवयो भवन्तीत्यर्थः ।अधिकं सौरभं च बिभ्रतीत्यर्थः॥६४॥

निम्बारग्वधदाडिम शिरीषकल्कैः सलोध्रकैःस्त्रीणाम् ।
रजनीयुतमुस्तैः स्यादङ्गानांसुन्दरो रागः ॥६५॥

निम्बेति । निम्बः प्रसिद्धः । अरग्वधः. हिन्दीभाषायाम् अमलतास इति प्रसिद्धः । दाडिमः अनार इति हिन्दीभाषायां प्रसिद्धः । शिरीषवल्कः एतैः लोध्रकं लोध्रकाष्ठं तत्सहितैः रजनीयुता हरिद्रा-

युक्ता मुस्ता भद्रमुस्ता एतैस्सर्वैः स्त्रीणामङ्गानां सुन्दरो रागः स्यादित्यर्थः ॥ ६५ ॥

कृष्णातिलकृष्णजीरक सिद्धार्थजीरकैःसमं पयसा ।
लेपोऽतिवदनसुभगोऽप्यङ्गकलङ्कं च नाशयति ॥६६॥

कृष्णातिलेति । कृष्णातिलः,कृष्णजीरकः,हिन्दीभाषायां मगरैला इति प्रसिद्धः । सिद्धार्थः गौरसर्षपः,जीरकः हिन्दीभाषायां जीरा इति प्रसिद्धः । एतैस्सर्वैः पयसा समं कृतलेपः पुरुषः अतिसुन्दराङ्गोपि, अङ्गकलङ्कं च नाशयतीत्यर्थः ॥ ६६ ॥

अपनयति बदरमज्जा गुडमधुनवनीतसंयुताप्यङ्गम् ।
लेपेन वरुणकल्कलमज्जाक्षीरेण पिष्टं वा ॥ ६७ ॥

अपनयतीति । बदरः, हिन्दीभाषायां बेर इति प्रसिद्धः । तस्य मज्जा गुडमधुनवनीतैः संयुता युक्ता तस्या लेपेन अङ्गकलङ्कम् अपनयति विनाशयति । अथवा वरुणकल्कलमज्जाक्षीरेण पिष्टं सत् अङ्गकलङ्कं विनाशयतीत्यर्थः ॥ ६७ ॥

लोध्रवचाधान्याकैर्यौवनपिटकापहो लेपः ।
गोरोचनान्वितेन च लेपो मरिचेन तादृक्षः ॥ ६८ ॥

लोध्रेति । लोध्रः,लोध इति हिन्दीभाषायां प्रसिद्धः । वचा, वच इति हिन्दीभाषायां प्रसिद्धा । धान्याकं धान्यकम् एतैस्सर्वैर्लेपः यौवनस्य पिटका पिडका व्रणविशेषः,प्रमेहजन्यविस्फोटकभेदो वा,तन्नाशकरो भवतीत्यर्थः । गोरोचना स्वनामख्यात सारजवर्गीयद्रव्यं,तथा-चोक्तम्--

गोरोचना हिमा तिक्ता वश्या मङ्गलकान्तिदा ।
विषा लक्ष्मीग्रहोन्मादगर्भस्रावक्षतास्रहृत् ॥ इति ॥

तया अन्वितेन मरिचेन च लेपःतादृक्षः यौवनपिटकापहो भवतीत्यर्थः ६८

वितुषयवचूर्णयष्टीमधुसितसिद्धार्थलोध्रलेपेन ।
स्त्रीणां भवन्ति नियतं वरकाञ्चनतुल्यानि वदनानि ॥६९॥

वितुषेति । वितुषः तुषरहितः यवः तस्य चूर्णं यष्टी यष्टिमधु, मधु, सितसिद्धार्थः श्वेतसर्षपः, लोध्रः एतेषां लेपेन स्त्रीणां वदनानि नियतं वरं श्रेष्ठं काञ्चनं सुवर्णं तत्तुल्यानि तत्सदृशानि भवन्तीत्यर्थः ९९

परिणतवटदलकाञ्चनपर्णीमधुकप्रियङ्गुपद्मानाम् ।
सहदेवीहरिचन्दनलाक्षावाह्लीकलोध्राणाम् ॥ १०० ॥
समभागैर्जलपिष्टैर्विलासिनीनां करोति नियतमयम् ।
अधरितशारदशशधरदीधिति मुखपङ्कजं लेपः ॥ १०१ ॥

परिणतेति । परिणतं परिपक्वं वटदलं वटपत्रं, काञ्चनपर्णी, कचनार इति हिन्दीभाषायां प्रसिद्धा । मधुकं यष्टिमधु, प्रियङ्गुः स्वनामख्यात सुगन्धलता, तद्गुणाश्च–शीतला तिक्ता दाहरक्तपित्तघ्नी वान्तिभ्रान्तिज्वरघ्नी मुखजाड्यहरी च । पद्मं कमलम् तेषाम्, सहदेवी, सहदेइआ इति हिन्दीभाषायां प्रसिद्धा । हरिचन्दनं प्रसिद्धं, लाक्षा, लाही इति हिन्दीभाषायां प्रसिद्धा । वाह्लीकं कुङ्कुमं, लोध्रः एतेषां समभागैः जलपिष्टैः अयं लेपः विलासिनीनाम् अधरितः तिरस्कृतः शारदः शरत्कालीनः शशधरः चन्द्रः तस्य दीधितिः किरणं येन एतादृशं मुखकमलं नियतम्, अवश्यमेव करोतीत्यर्थः ॥१०० ॥ १०१ ॥

अथ कुचोन्नतिकरणोपायः कथ्यते—

श्रोतोञ्जनतण्डुलजलनस्याभ्यासेन भवति युवतीनाम् ।
रसिकहृदयधनतस्करमतिविपुलोत्तुङ्गकुचयुगलम् ॥१०२॥

श्रोतोञ्जनेति । श्रोतः शिरा, अञ्जनं प्रसिद्धं, तण्डुलजलनस्यं तस्याऽभ्यासेन युवतीनां कुचयुगलं रसिकानां हृदयमेव धनं तस्य तस्करम्, अतिविपुलोत्तुङ्गम् अतिविशालम् उन्नतं च भवतीत्यर्थः ॥ १०२ ॥

युवतिवचाकटुकान्वितकृताञ्जलीरजनितुल्यमात्राभिः ।
गोमहिषीघृततुल्यं तैलं संसाधितं विधिना ॥ १०३ ॥
कुरुते परिणतवयसामपि वनितानां त्रिसप्तरात्रेण ।
स्थिरविपुलतुङ्गकठिनं स्तनयुगलं तस्य योगेन ॥ १०४ ॥

युवतीति । युवतिः प्रियङ्गुः, वचा प्रसिद्धा, कटुका कटुकरोहिणी, ताभिः अन्विता कृताञ्जली लज्जावती लता, रजनिः हरिद्रा एतासां तुल्यमात्राभिःविधिना संसाधितं गोमहिषीघृततुल्यं तैलं तस्य योगेन परिणतवयसामपि, वृद्धानामित्यर्थः । वनितानां स्तनयुगलं त्रिसप्तरात्रेण स्थिरं विपुलं तुङ्गं कठिनं कुरुते इत्यर्थः ॥ १०३ ॥ १०४॥

गृहगतगोलाङ्गूलो नवनीतं भोजितस्सहरितालम् ।
अथ तन्मललिप्तकरो हरति कुचं मुष्टिबन्धेन ॥१०५॥

गृहगतेति । गृहगतः गोलाङ्गुलः कपिः, सहरितालं नवनीतं भोजितः, अथानन्तरं तस्य मलेन लिप्तकरः मुष्टिबन्धेन कुचं हरतीत्यर्थः ॥ १०५ ॥

सुरगोपभूमिलतयोश्चूर्णं यस्या भगे नरः क्षिपति ।
स्तम्भितशस्त्र इवाऽऽजौ तादितरपुरुषो रते तस्याः ॥१०६॥

सुरगोपेति । सुरगोपः इन्द्रगोपकीटः, भूमिलता शङ्खपुष्पी लता अनयोः चूर्णं नरः यस्याः भगे क्षिपति तस्या रते तस्मात् इतरपुरुषः आजौ संग्रामे रुद्धशस्त्र इव जायत इत्यर्थः ॥ १०६ ॥

गगनसमागतवल्गुलिविष्ठालिप्तध्वजेन यां भजते ।
सकृदपि सा तदितरतो वाञ्छां दूरेण परिहरति ॥१०७॥

गगनेति । गगने समागता वल्गुली प्रतुदपक्षिविशेषः, तस्याः विष्ठया लिप्तेन ध्वजेन पुरुषः यां वनितां सकृदपि भजते सा तादितरतः वाञ्छाम् अभिलाषां दूरेण परिहरतीत्यर्थः । स्वविष्ठामपि केचिद्वदन्ति ॥ १०७ ॥

तां विष्ठां पुटपाके दग्ध्वा सह काञ्जिकेन भगलेपात् ।
भवति कृता प्रकृतिस्था रमणी रमणीयताभूमिः ॥१०८॥

तामिति । तां विष्ठां पुटपाके दग्ध्वा काञ्जिकेन सह हिन्दीभाषायां कांजी इति प्रसिद्धः । भगस्य लेपात् प्रकृतिस्था कृता सती रमणी रमणीयता सुन्दरता तस्या भूमिः भवतीत्यर्थः ॥ १०८ ॥

खररेतोमिलितारुणमुखकपिरेतोविलिप्तरतिनिलयाम् ।
गत्वा न जातु कामी कामयते कामिनीमन्याम् ॥१०९॥

खररेत इति । खररेतसा गर्दभवीर्येण मिलितम् अरुणमुखक-पिरेतः तेन विलिप्तरतिनिलयां लिप्तगुह्यां कामिनीं गत्वा कामी अन्यां कामिनीं जातु कदाचिदपि न कामयते ॥ १०९ ॥

अथ क्लीबत्वप्राप्तिकारणं ब्रूते—

षण्ढो भवति नरोऽसौ बहुवारदले खुरे च खट्वायाः ।
यस्यालक्तकपत्रे बद्ध्वा निक्षिप्यते रेतः ॥ ११० ॥

षण्ढइति । यस्य रेतो बहुवारदले बहुवारो वृक्षविशेषस्तस्य दले, खट्वायाः खुरे पादे अलक्तकपत्रे च बद्ध्वा निक्षिप्यते स नरः षण्ढो भवति, नपुंसकत्वं प्राप्नोतीत्यर्थः ॥ ११० ॥

अजमूत्रभावितं षड्बिन्दुरजोरजनिचूर्णयुगमशितम् ।
उपनयति नियतमचिरान्नरस्य यूनोऽपि षण्ढत्वम् ॥१११॥

अजमूत्रेति । अजमूत्रे छागमूत्रे भावितं षड्बिन्दुरजः रजनि-चूर्णयुगं हरिद्राचूर्णयुगलम्, अशितं सत् यूनोऽपि नरस्य षण्ढत्वम् अचिरात् शीघ्रं नियतम्, अवश्यमेव उपनयति प्रापयतीत्यर्थः॥१११॥

अथ षण्ढत्वनाशनप्रकार उच्यते

सतिलं गोक्षुरचूर्णं छागीक्षीरेण साधितं मधुना ।
सह पीतं सप्ताहाच्छमयति षण्ढत्वमचिरेण ॥११२॥

सतिलमिति । तिलसहितं गोक्षुरः स्वनामख्यातक्षुपः, हिन्दीभाषायां गोखुरु इति प्रसिद्धः । तस्य चूर्णं छागीक्षीरेण साधितं सप्ताहात् मधुना सह पीतम् अचिरेण शीघ्रं षण्ढत्वं शमयतीत्यर्थः ॥ ११२ ॥

नरपार्श्वस्थेनास्थ्ना विद्धं करभास्थि स्थाप्यते यस्याः ।
शयनशिरोभागे स्याल्लग्नत्वं तस्य रतिकाले ॥ ११३ ॥

नरपार्श्वेति । नरपार्श्वस्थितेन अस्थ्ना विद्धं करभास्थि उष्ट्रास्थि यस्य शयनाशिरोभागे स्थाप्यते तस्य रतिकाले लग्नत्व स्यात् कलहः स्यादित्यर्थः । भगनिहितम्मेहनं न निर्गच्छतीत्यर्थः । तदुद्धरणान्मोक्षः ॥ ११३ ॥

अथ वैरोत्पादनप्रकारं कथयति—

क्रियते पेचकमेचककाकासृक्सर्पिषा ययोर्नाम्ना ।
कोविल्लकसमिदष्टोत्तरशतहोमो भवेद् द्वेषः ॥११४॥

क्रियतइति । पेचकः उलूकः तद्वत् मेचकः कालवर्णः काकः तस्य असृक्सर्पिषा ययोर्नाम्ना कोविल्लस्य बिल्वस्य समिद्भिः अष्टोत्तरशतहोमः क्रियते तयोः द्वेषो वैरं भवेदित्यर्थः ॥११४॥

काकोलूकजरोम्णा होमश्च मिथुनयोस्तद्वत् ।
अनयोरसृजा होमो नाम लिखित्वा च निम्बदलैः ॥११५॥

काकोलूकेति । मिथुनयोर्नाम निम्बस्य दलैः लिखित्वा काकोलूकजरोम्णा होमः, अथवा अनयोः असृजा रक्तेन होमः तद्वत् परस्परं वैरं भवतीत्यर्थः ॥ ११५ ॥

मूषकमार्जारद्विजदिगम्बराणां च रोमभिरपि ।
क्रियते यस्मिन् वेश्मनि तत्रत्यानां मिथो वैरम् ॥ ११६ ॥

मूषकेति । मूषकः आखुः, मार्जारः विडालः, द्विजः अण्डजः, दिगम्बरः एतेषामपि रोमभिः यस्मिन् वेश्मनि गृहे होमः क्रियते तत्र स्थितानां पुरुषाणां मिथो वैरं भवति । द्विजो ब्राह्मणो वा यत्र वेश्मनि एतैरोमभिः दीपो धूपश्च दीयते तत्रस्थानां मिथो वैरमित्यर्थः॥११६॥

अथ प्रीत्युत्पादनप्रकारं कथयति—

सुरतरुतगरवचागुरुमृगमदमलयजरसैः ।
धूपो वेश्मनि विहितः परस्परं प्रीतिमातनुते ॥११७॥

सुरतरुरिति । सुरतरुः कल्पवृक्षः, तगरं, वचा, अगुरुः कृष्णागुरुः, मृगमदः कस्तूरी, मलयजः चन्दनम् एतेषां रसैः वेश्मनि

विहितः धूपः परस्परं प्रीतिम् आतनुते, करोतीत्यर्थः ॥ ११७ ॥

अथ नागार्जुनस्य योगानुद्धरति—

नागार्जुनेन कथिता योगा बहवश्चतुर्दशद्रव्यैः ।
दृष्टफलान् प्रकृतानिह योगांस्तत्रोद्धरिष्यामः ॥११८॥

नागार्जुनेनेति । नागार्जुनाख्येन सिद्धेन बहवो योगाश्चतुर्दशद्रव्यैः कथिताः, दृष्टफलान् तत्रस्थान् प्रकृतान् प्रसिद्धान् योगानिह शास्त्रे उद्धरिष्यामः ॥ ११८ ॥

भृङ्गरजोमोहलते मोहयतस्तिलकतो विश्वम् ।
अजकर्ण्या सरुदन्त्या सह सहदेव्या च लज्जालुः ॥११९॥

भृङ्गरजइति । भृङ्गरजो मार्कवरजः, मोहलता धत्तूरः, यदि वा मोहलतैव, तिलकतः तत्तिलकेन विश्वं जगन्मोहयतः, अजकर्ण्या रुदन्त्या सहितया, सहदेव्या सह लज्जालुश्च तिलकेन विश्वं जगद् मोहयत इति सम्बन्धः ॥ ११९ ॥

अथ वशीभावप्रकारं ब्रूते—

शिखिशिखयाऽङ्गारिकया सहिते सुरवारुणीकृताञ्जल्यौ ।
भगनिहिते भामिन्या दासीभावं च दासतां पुंसः ॥१२०॥

शिखिशिखेति । शिखिशिखया मयूरशिखयाऽङ्गारिकया सहिते सुरवारुणीकृताञ्जल्यौ भगनिहिते भामिन्या दासीभावं, पुरुषस्य दासभावं च कुरुत इत्यर्थः । कृताञ्जलिलज्जालुरिति ॥ १२० ॥

भृङ्गरजोलज्जालुकहरजटधवलार्कलेपतो वपुषः ।
क्रान्तासितार्कपुञ्जारिहरजटगुलिका वशीकुरुते ॥१२१॥

भृङ्गरजइति । भृङ्गरजोलज्जालुकहरजटधवलार्कलेपः, भृङ्गरजः प्रसिद्धः, लज्जालुकः कृताञ्जलिः, हरजटा रुद्रजटा, धवलार्कः श्वेतार्कमूलम् एतैः कृतलेपः पुरुषः यथा वशीकुरुते तथा क्रान्ता विष्णुक्रान्ता, सितार्कः श्वेतार्कमूलम्, पुञ्जारी पुत्रजारिः, हरजटा रुद्रजटा च एतैः कृता गुटिका वशीकुरुते ॥ १२१ ॥

गोचन्दनाजकर्णीरुदन्तिकाकन्यकाभिरिह विहितः ।
भगलेपो मरणान्तं स्त्रीणाम्प्रेमप्रसाधयति ॥१२२॥

गोचन्दनेति । गोचन्दनादिभिः कृतो भगलेपो मरणान्तं स्त्रीणाम्प्रेम प्रसाधयति । कन्यका कन्याकुमारी ॥ १२२ ॥

लज्जालुकसहदेवीकन्यागोरोचनोद्भवञ्चूर्णम् ।
ताम्बूलेन विकीर्णं नार्या परमं वशीकरणम् ॥१२३॥

लज्जालुकेति । लज्जालुकसहदेवीकन्यागोरोचनोद्भवञ्चूर्णम् ताम्बूलेन विकीर्णं दत्तं सत् नार्याः परमं वशीकरणम् ॥ १२३ ॥

विष्णुक्रान्तासितरविकृताञ्जलीशिखिशिखामिरालेपः ।
वनितावराङ्गविवरे द्रावणमङ्गे वशीकरणम् ॥१२४॥

विष्णुक्रान्तेति । विष्णुक्रान्तादिभिर्लेपो वनितानां वराङ्गविवरे स्मरमन्दिररन्ध्रे द्रावणः । अङ्गे कृतो लेपो वशीकरणः ॥ १२४ ॥

अथ बीजस्तम्भनोपायं कथयति—

भृङ्गरजःकन्याभ्यांविष्णुक्रान्तासजातिकामिलिता ।
सा मुखधृतगुटिका वा बीजस्तम्भं रते कुरुते ॥१२५॥

भृङ्गेति । भृङ्गरजः कन्याभ्यां विष्णुक्रान्ता सजातिकामिलिता एताभिः कृता गुटिका मुखधृता रतौ च बीजस्तम्भङ्कुरुते ॥ १२५ ॥

अथ दुर्भगायाः सौभाग्यकरणोपायं ब्रूते—

विष्णुक्रान्ताहरजटभृङ्गरजोभिस्समेतसहदेव्या ।
स्मरसदनविलेपनतःसौभाग्यं दुर्भगा लभते ॥१२६॥

विष्णुक्रान्तेति । विष्णुक्रान्ताहरजटाभृङ्गरजोभिः समेतया सहदेव्या स्मरसदनविलेपनतः मदनसदनलेपात् दुर्भगाऽपि सौभाग्यं लभते ॥ १२६ ॥

गर्भधारणोपायं कथयति—

गोचन्दनदण्डोत्पलविष्णुकान्ताकृताञ्जलीचूर्णम् ।
रजसि स्नातापीत्वा गर्भं वहेत वन्ध्याऽपि ॥१२७॥

गोचन्देनेति । गोचन्दनदण्डोत्पलविष्णुक्रान्ताकृताञ्जलीनां चूर्णम्, रजसि स्नाता ऋतुस्नाता ऽङ्गना पीत्वा वन्ध्याऽपि गर्भं वहेत भजति, गर्भिणी भवतीत्यर्थः ॥ १२७ ॥

सुखप्रसूत्युपायं निगदति—

सरुदन्त्या शिखिशिखया पुत्रजातीकुमारिके मिलिते ।
गुह्ये निधाय धत्ते सुखसूतम्मूढगर्भाऽपि ॥ १२८ ॥

सरुदन्त्येति । शिखिशिखया सरुदन्त्या, जातिकुमारिके मिलिते एतान्यौषधानि गुह्ये निधाय मूढगर्भाऽपि सुखसूतं पुत्रं धत्ते ॥ १२८ ॥

उपसंहरति—

सरुदन्त्या हरजटया सह सहदेव्या च शिखिशिखया ।
कृतलेपस्य शरीरे समस्तकार्य्याणि सिध्यन्ति ॥ १२९ ॥

सरुदन्त्येति । एतैः शरीरे कृतलेपस्य समस्तकार्याणि सिध्यन्ति। आगमभाषाप्रसिद्धानि, लिङ्गभाषाप्रसिद्धानि चौषधानि अञ्जसा साकल्येन वक्तुं कस्समर्थः, अतो मयाऽपि यावज्ज्ञातन्तावदुक्तम् ॥ १२९ ॥

उद्भूतः पारिभद्रादमरनरफणिप्रेयसीगीतकीर्तेः
नप्ता तेजोकनाम्नस्सदसि बहुमतः पण्डितानां कवीनाम् ।
एतच्छ्रीगद्यविद्याधरकवितनयः कामकेलीरहस्यं ।
कोक्कोकः कामुकानाङ्किमपि रतिकरं व्याकरोत्कौतुकेन१३०

इति श्रीसिद्धपण्डितकोक्कोककविविरचिते रतिरहस्ये
सकलस्त्रीप्रस्तावभेदयोगो नाम
पञ्चदशः परिच्छेदः ।
समाप्तोऽयं ग्रन्थः ।

उद्भूतइति । अमरनरफणिप्रेयसीगीतकीर्तेः लोकत्रयप्रसिद्धा-दित्यर्थः । अस्य कीर्तिर्लोकत्रये स्थितरमणीभिर्गीयत इत्यर्थः । एव-म्भूतात् पारिभद्रात् पारिभद्राभिधानात् महापुरुषादुद्भूतः जातः । तेजोकनाम्नः तेजोक इति प्रसिद्धस्य नप्ता पौत्रः, तेजोकनामाऽस्य पितामहः इत्यर्थः । पण्डितानां कवीनाञ्च सदसि बहुमतः श्रीगद्य-विद्याधरकवितनयः । अस्य पितुः पारिभद्रस्य श्रीगद्यविद्याधर इति विरुदनामेत्यवधेयम् । एवम्भूतः कोक्कोकः कामुकानां रतिकरम् एतत् किमपि कामकेलीरहस्यं रतिरहस्यनाम कामशास्त्रं कौतुकेन कुतूहलेन व्याकरोत् व्याहृतवान् ॥ १३० ॥

इति श्रीकाञ्चीनाथकृतायां रतिरहस्यदीपिकायां
सकलस्त्रीप्रस्तावभेदयोगो नाम
पञ्चदशः परिच्छेदः ॥
समाप्तेयं टीका ।

